रद्धातो, सो ताहिं जहा चालणी तहा कतो, पायसिराहिंतो जाव सीसकरोडी ताव गयातो, तहवि न झाणातो चलितो ॥

तथा चामुमेवार्थं प्रतिपादयन्नाह—

जो तिहिं पएहिं सम्मं समभिगओ संजमं समारूढो । उवसम-विवेग-संवर चिलाइपुत्तं नमंसामि ॥ ८७२ ॥

यः त्रिभिः पादैः 'सम्मं'ति सम्यक्त्वं समभिगतः-प्राप्तः, तथा संयमं समारूढः, कानि त्रीणि पदानीत्यत आह-उपशमो विवेकः संवर इति, तत्रोपशमः-क्रोधादिनिग्रहः विवेकः-स्वजनसुवर्णादित्यागः, संवरः-इन्द्रियनोइन्द्रियगोपनं, तमित्थंभूतमुपशमविवेकसंवरलक्षणपदत्रयश्रवणतः संयमसमारूढं चिलातीपुत्रं नमस्यामि ॥

अहिसरिआ पाएहिं सोणिअगंधेण जस्स कीडीओ । खायंति उत्तमंगं तं दुक्करकारयं वंदे ॥ ८७३ ॥

अभिसृताः-प्रविष्टाः पादाभ्यां शोणितगन्धेन यस्य अविचलिताध्यवसायस्य कीटिका भक्षयंति उत्तमाङ्गं, शोणितगन्धेन यस्य पादशिराभिः प्रविश्य कीटिका मध्यभागं भक्षयन्त्यस्तावद् गता यावदुत्तमाङ्गम्, उपरिष्टाच्चालनीव काणितमित्यर्थः, तमित्थं दुष्करकारकं वन्दे, चिलातीपुत्रमिति वर्त्तते ॥

धीरो चिलाइपुत्तो मूइंगलियाहिं चालिणिव्व कतो । सो तहवि खज्जमाणो पडिवन्नो उत्तमं अट्ठं ॥ ८७४ ॥

धीरः-सत्त्वसम्पन्नश्चिलातीपुत्रः 'मूइंगलियाहिं' इति कीटिकाभिर्भक्ष्यमाणश्चालनीवत् कृतः यस्तथापि-तेनापि प्रकारेण खाद्यमानः सन् प्रतिपन्न उत्तमार्थं, शुभपरिणामापरित्यागात् ॥

अड्ढाइज्जेहिं राइंदिएहिं पत्तं चिलाइपुत्तेणं । देविंदामरभवणं अच्छरगणसंकुलं रम्मं ॥ ८७५ ॥

अर्धतृतीयै रात्रिंदिवैः–अहोरात्रैः प्राप्तं चिलातीपुत्रेण देवेन्द्रस्येव अमरभवनं देवेन्द्रामरभवनम् अप्सरोगणसङ्कुलं रम्यमिति ॥ द्वारम् ॥ सङ्क्षेपद्वारमधुना—

सयसाहस्सा गंथा सहस्स पंच य दिवड्ढमेगं च । ठविआ एगसिलोगे संखेवो एस नायव्वो ॥ ८७९ ॥

चत्तारि वालतवस्सी सयसाहस्से गंथे काउं जियसत्तुं रायाणमुवट्ठिया–अम्ह सत्थाणि सुणेहि, तुमं पंचमो लोगपालो, तेण भणियं–केत्तियं ?, ते भणंति–चत्तारि संहियातो सयसाहस्सीतो, सो भणइ–एच्चिरेणं कालेणं मम रज्जं सीयइ, ततो अद्धं अद्धं कयं, तहवि राया न पडिच्छइ, एवं अद्धं अद्धमोसारिज्जंतं जाव एक्केक्को सिलोगो ठितो, तंपि न सुणइ, ताहे तेहिं चउहिं नियमयपदरिसणसहियो एक्को सिलोगो कतो, स चायम्–" जीर्णे भोजनमात्रेयः, कपिलः प्राणिनां दया । बृहस्पतिरविश्वासः, पाञ्चालः स्त्रीषु मार्दवम् ॥ १ ॥" आत्रेय एवमाह–जीर्णे भोजनं सेवनीयमारोग्यार्थिना, एवं प्रत्येकं योजना कार्या, एवं सामायिकमपि चतुर्दशपूर्वार्थसङ्ग्रहात् सङ्क्षेपो वर्त्तते इति ॥ गतं सङ्क्षेपद्वारम्, इदानीमनवद्यद्वारं, तत्र कथानकम्–वसंतपुरे नगरे जियसत्तू राया, धारिणी देवी, तीसे पुत्तो धम्मरुई, सो य राया थेरो, अन्नया ताव सो पव्वइउकामो धम्मरुइस्स रज्जं दाउमिच्छइ, सो मायरं पुच्छइ–कीस तातो रज्जं परिच्चयइ ?, सा भणइ–रज्जं संसारवद्धणं, सो भणइ–ममवि न कज्जं, ततो सोऽवि सह पियरेण तावसो जातो, तत्थ अमावासा होहित्ति गंडओ घोसेइ आसमेसु–कल्लं अमावसा होहि, इतो पुप्फफलाणं संगहं करेह, कल्लं न वट्टेइ छिंदिउं, धम्मरुई चिंतेइ–सव्वकालं न छिंदेज्जा तो सुंदरं होज्जा, अण्णया साहू अमावासाए तावसासमस्स अदूरेण वोलंति, ते धम्मरुई पेच्छिऊण भणति–भयवं ! किं तुज्झं अणा-

आत्रेयधर्मरुची

॥ ४८० ॥

कुट्टी नत्थि ?, तो अडविं जाह, ते भणंति–अम्हं जावज्जीवं अणाकुट्टी, सो संभंतो चिंतिउमारद्धो, साहुवि गया, जाई संभरिया, पत्तेयबुद्धो जातो ॥ अमुमेवार्थमभिधित्सुराह—

सोऊण अणाउट्टिं अणभीओ वज्जिऊण अणगं तु । अणवज्जगं उवगओ धम्मरुई नाम अणगारो ॥ ८७७ ॥

श्रुत्वा–आकर्ण्य आकुट्टनमाकुट्टिः–छेदनं, हिंसेत्यर्थः, न आकुट्टिरनाकुट्टिः तां सर्वकालिकीमाकर्ण्य 'अणभीतः' अणवणेति दण्डकधातुः, अणति–गच्छति तासु तासु योनिषु जीवोऽनेनेति अणं–पापं तद्भीतः वर्जयित्वा अणगं तु, परित्यज्य सावद्ययोगमित्यर्थः, वर्जनीयो वर्ज्यः अणस्य वर्ज्यः अणवर्ज्यः तद्भावस्तत्ता तां अणवर्ज्यतामुपगतः–प्राप्तः, साधुः संवृत्त इति भावः, धर्मरुचिर्नामानगारः ॥ गतमनवद्यद्वारम्, सम्प्रति परिज्ञानद्वारम्, तत्र कथानकमिलापुत्रस्य, तत्र प्रागेवाभिहितमिति गाथोच्यते—

परिजाणिऊण जीवे अजीवे जाणणापरिन्नाए । सावज्जजोगकरणं परिजाणइ सो इलापुत्तो ॥ ८७८ ॥

परिज्ञाय जीवान् अजीवांश्च 'जाणणापरिण्णाए'त्ति ज्ञपरिज्ञया सावद्ययोगकरणं परिजाणइ सो इलापुत्तो, सावद्ययोगक्रियां परिजाणइत्ति प्रत्याख्यानपरिज्ञया परिजानाति स इलापुत्रः ॥ गतं परिज्ञानद्वारम्, इदानीं प्रत्याख्यानद्वारम्, तत्र कथानकम्–तेतलिपुरं नगरं, कणगरहो राया, पउमावती देवी, राया भोगलोलो जाए जाए पुत्ते वियंगेइ, तेतलिसुतो अमच्चो कलादो, तेण मूसियारो सेट्ठी तस्स धूया पोट्टिला आगासतले दिट्ठा, मग्गिया लद्धिया, अमच्चो पउमावती य परोप्परं भणंति–एगं कहवि कुमारं संरक्खामो, सो तव मम य भिक्खाभायणं भविस्सति, मम उदरे पुत्तो एगं रहस्सगयं सारवेमो, संपत्तीए पोट्टिला देवी य समं चेव पसूया, पोट्टिलाए दारिया देवीए दिन्ना, देवीए कुमारो पोट्टिलाए, सो संवड्ढइ, कलातो य

गिण्हइ, अन्नया पोट्टिला तेतलिस्स अणिट्ठा जाया, नाममवि न गेण्हइ, अन्नया सा पवइयातो पुच्छइ—अत्थि किंचि जाणह ? जेण अहं पिया होज्जा, तातो भणंति—न वट्टइ एयं कहेउं, धम्मो कहितो, संवेगमावण्णा पुच्छइ—पवयामि, भणइ—जइ संबोहेसि, ताए पडिस्सुयं, सामन्नं काउं देवलोगं गया, सो य राया मतो, ताहे पउरस्स दंसेइ कुमारं रहस्सं च भिंदेइ, ताहे सो रज्जे अहिसित्तो, माया कुमारं भणइ—तेयलिसुयस्स सुट्ठु वट्टेज्जासि, तस्स पहावेण तं राया जातो, तस्स नामं कयं कणगज्झतो, ताहे सवट्ठाणेसु अमच्चो ठावितो, देवो तं बोहेइ, न संबुज्झइ, ताहे रायाणगं विपरिणामेइ, जतो ठाइ ततो राया परम्मुहो ठाइ, भीतो घरमागतो, सोऽवि परियणो नाढाइ, सुट्ठुयरं भीतो, ताहे तालपुडं विसं खाइ, न मरइ, कंको असी खंधे वाहितो, न छिंदइ, उव्वंधइ, रज्जू छिन्ना, पच्छा पाहाणं गलए वंधित्ता अत्थाहं पाणियं पविसइ, तत्थवि थाहो जातो, ताहे तणकूडे अग्गिं काउं पविट्ठो, तत्थवि न डज्झइ, ततो नगरीतो निप्फिडित्ता अडविं पविसइ, तत्थ जाव खणमेत्तं जाइ तो हत्थी वेगेण आगच्छइ, पुरतो महती पवायखड्डा, उभतो बहलंधयारेण अचक्खूफासो, मज्झे य सरा पडंति, ताहे तत्थ ठितो चिंतेइ—पोट्टिला जइ मं नित्थारेज्जत्ति, एवं वयासी—हा पोट्टिले ! आउसो पोट्टिले ! कत्तो वयामो ?, आलावगे भणइ, जहा तेतलिणाए, ताहे सा भणइ—भीयस्स भो ! खलु पवज्जा ताणं, आउरस्स भेसज्जकिच्चं, संतस्स वाहणकिच्चं, महाजले वहणकिच्चं, एवमादी आलावगा, तं दट्ठूण संबुद्धो, भणइ—रायाणं उवसामेहि, मा भणिहिति—रुट्ठो पवइतो, ताए साहरियं, ताव समंततो मग्गिज्जइ, रण्णो कहियं, सह मायाए निग्गतो, खामेत्ता पवेसितो, निक्खमणं, सिवियाए आनीणितो, पवइतो य ॥ चूर्णिकारस्त्वेवं कथितवान्—"भीयस्स खलु भो ! पवज्जा ताणं आउरस्स भेसज्जकिच्चमिच्चाइ

लावगे दोच्चंपि तच्चंपि वइत्ता जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया, ततो णं तस्स अणुचिंतेमाणस्स सुभेणं परिणामेणं जातिस्सरणं समुप्पण्णं, एवं खलु अहं जंबुद्दीवे महाविदेहे पुक्खलावइविजए पोंडरगिणीए नयरीए महापउमे नाम राया होत्था, थेराणं अंतिए पव्वइए, सामाइयमाइयाइं चउद्दस पुव्वाइं अहिज्जित्ता बहूइं वासाइं सामन्नपरियागं पाउणित्ता मासियाए संलेहणाए आलोइयपडिक्कंते समाहिपत्ते कालं किच्चा महासुक्के कप्पे देवत्ताए उववन्ने, तए णं तओ चइत्ता इहेव जंबुद्दीवे दीवे भारहे वासे तेतलिपुरे नयरे तेतलिस्स अमच्चस्स दारए जाते, तं सेयं खलु मम पुव्वदिट्ठाइं महव्वयाइं सयमेव उवसंपज्जित्ताणं विहरित्तए, ततो जेणेव पमयवणो उज्जाणो तेणेव उवागम्म असोगवरपायवस्स हेट्ठा सुहनिसन्ने, तत्थ तस्स अणुचिंतेमाणस्स पुव्वाधीयाइं चोद्दसपुव्वाइं सयमेव अभिसमन्नागयाइं, तते णं से सुभेण अज्झवसाणेणं केवली जाते, अहासंनिहितेहिं देवेहिं महिमा कया, इमीसे कहाए लद्धट्ठे समाणे कणगज्झओ राया मायाए समं सवड्ढीए आगंतूण खामेइ, धम्मं कहेइ, सावगे जाते; भयवं केवली अज्झयणं भासइ, एवं तेण पच्चक्खाणेण समया कया, सावद्ययोगाः प्रत्याख्यानपरिज्ञाता इत्यर्थः ॥ अत्र गाथा—

पच्चक्खे इव दट्ठुं जीवाजीवे य पुण्ण-पावं च। पच्चक्खाया जोगा सावज्जा तेअलिसुएणं ॥ ८७९ ॥

प्रत्यक्षानिव दृष्ट्वा जीवाजीवान् पुण्यं पापं च सम्यक् चतुर्दशपूर्वस्मरणात् प्रत्याख्याता योगाः सावद्याः तेतलिसुतेन। गतं निरुक्तिद्वारम् ॥

समाप्ता उपोद्घातनिर्युक्तिः ॥

अथ सूत्रस्पर्शिकनिर्युक्त्यवसरः, सा च प्राप्तावसराऽपि नोच्यते, यस्मादसति सूत्रे कस्यासाविति, ततः सूत्रानुगमे तां वक्ष्यामः, आह–यद्येवं किमिति तस्याः खल्विहोपन्यासः ?, उच्यते–निर्युक्तिमात्रसामान्यात् । सम्प्रति सूत्रानुगमोऽवसरप्राप्तः, तत्र सूत्रमुच्चारणीयं, तच्च किंभूतमिति लक्षणगाथा—

अप्पग्गंथमहत्थं बत्तीसादोसविरहियं जं च । लक्खणजुत्तं सुत्तं अट्ठहि य गुणेहिं उववेयं ॥ ८८० ॥

अल्पग्रन्थं च तत् महार्थं चेति विशेषणसमासः, अल्पग्रन्थमहार्थं यथा 'उत्पादव्ययध्रौव्ययुक्तं सदि'त्यादि सूत्रम्, अधिकृतसामायिकसूत्रं वा, यच्च द्वात्रिंशद्दोषविरहितं तत् सूत्रम्, के ते द्वात्रिंशद्दोषाः ?, उच्यते—

अलिय १ मुवघायजणयं २ निरत्थ ३ मवत्थयं ४ छलं ५ दुहिलं ६ ।
निस्सार ७ महिय ८ मूणं ९ पुणरुत्तं १० वाहय ११ मजुत्तं १२ ॥ ८८१ ॥
कमभिन्न १३ वयणभिन्नं १४ विभत्तिभिन्नं १५ च लिंगभिन्नं १६ च ।
अणभिहिय १७ मपय १८ मेव य सभावहीणं १९ ववहियं च २० ॥ ८८२ ॥
काल २१ जति २२ च्छविदोसो २३ समयविरुद्धं २४ च वयणमेत्तं २५ च ।
अत्थावत्ती दोसो २६ य होइ असमासदोसो २७ य ॥ ८८३ ॥
उवमा २८ रूवगदोसो २९ निद्देस ३० पयत्थ ३१ संधिदोसो ३२ य ।
एए उ सुत्तदोसा बत्तीसं होंति नायव्वा ॥ ८८४ ॥

तत्रालीकं द्विधा—अभूतोद्भावनं भूतनिह्नवश्च, तत्र अभूतोद्भावनं यथा प्रधानं जगतः कारणमित्यादि, भूतानह्नवः यथा नास्त्यात्मेत्यादि १ उपघातजनकं—सत्त्वोपघातजनकं, यथा वेदविहिता हिंसा धर्म्माय इत्यादि २ वर्णक्रमनिर्देशवत् निरर्थकम्, आरादेशादिवत् डित्थादिवद्वा ३, पौर्वापर्यायोगाद् असम्बद्धार्थमपार्थकं यथा दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः त्वर कीटिके दिशमुदीचीं स्पर्शनकस्य पिता प्रतिशीन इत्यादि ४ अर्थविकल्पोपपत्त्या वचनविघातः छलं, वाक्छलादि, यथा नवकम्बलो देवदत्त इत्यादि ५, द्रोहस्वभावं द्रुहिलं, यथा—'यस्य बुद्धिर्न लिप्येत, हत्वा सर्वमिदं जगत् । आकाशमिव पङ्केन, नासौ पापेन युज्यते ॥ १ ॥' ६ कलुषं वा द्रुहिलं, येन समता पुण्यपापयोरापद्यते, यथा—"एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः । भद्रे ! वृकपदं पश्य, यद्वदन्ति बहुश्रुताः ॥ १ ॥" इति, निस्सारं—परिफल्गु, यथा वेदवचनं ७, अधिकं—वर्णादिभिरभ्यधिकं ८, तैरेव हीनमूनं ९, अथवा हेतूदाहरणाधिकमधिकं, यथा—अनित्यः शब्दः कृतकत्वप्रयत्नानन्तरीयकत्वाभ्यां घटपटवदित्यादि ८, ताभ्यामेव हीनमूनं, यथा अनित्यः शब्दो घटवत्, अनित्यः शब्दः कृतकत्वादिति ९, शब्दार्थयोः पुनर्वचनं पौनरुक्त्यमन्यत्रानुवादात्, अर्थादापन्नस्य स्वशब्देन पुनर्वचनं च, तत्र शब्दपुनरुक्तमिन्द्र इन्द्र इति, अर्थपुनरुक्तमिन्द्रः शक्र इति, अर्थादापन्नस्य स्वशब्देन पुनर्वचनं यथा—देवदत्तो दिवा न भुङ्क्ते बलवान् पट्विन्द्रियश्च, अर्थादापन्नं रात्रौ भुङ्क्ते इति, तत्र यो ब्रूयात्—दिवा न भुङ्क्ते रात्रौ भुङ्क्ते स पुनरुक्तमाह १०, व्याहतं नाम यत्र पूर्वेण परं व्याहन्यते, यथा 'कर्म्म चास्ति फलं चास्ति, कर्त्ता नास्ति च कर्म्मणा' मित्यादि ११ अयुक्तम्—अनुपपत्तिक्षमं, यथा—'तेषां कटतटभ्रष्टैर्गजानां मदबिन्दुभिः । प्रावर्त्तत नदी घोरा, हस्त्यश्वरथवाहिनी ॥१॥' इत्यादि १२,

क्रमभिन्नं यत्र यथासङ्ख्यमनुदेशो न क्रियते यथा 'स्पर्शनरसनघ्राणचक्षुःश्रोत्राणामर्थाः स्पर्शरसगन्धवर्णशब्दा' इति
वक्तव्ये स्पर्शरूपशब्दगन्धरसा इति ब्रूयादित्यादि १३, वचनभिन्नं यत्र वचनव्यत्ययो, यथा वृक्षावेतौ पुष्पिता इत्यादि
१४, विभक्ति[वि]भिन्नं च यत्र विभक्तिव्यत्ययः, यथैष वृक्ष इति वक्तव्ये एष वृक्षमित्याह १५, लिङ्गभिन्नं यत्र लिङ्ग-
व्यत्ययः, यथा इयं स्त्रीति वक्तव्ये अयं स्त्रीत्याह १६, अनभिहितं—स्वसिद्धान्तेऽनुपदिष्टं, यथा सप्तमः पदार्थो दशमं द्रव्यं
वा वैशेषिकस्य, प्रधानपुरुषाभ्यधिकं साङ्ख्यस्य, चतुःसत्यातिरिक्तं शाक्यस्येत्यादि १७ अपदं यत्र पद्ये विधातव्येऽन्य-
च्छन्दोऽभिधानं, यथा आर्यापादे वैतालीयपादाभिधानं १८[1], स्वभावहीनं यद्वस्तुनः प्रत्यक्षादिप्रसिद्धं स्वभावमतिरिच्या-
न्यथावचनं यथा शीतोऽग्निः मूर्त्तिमदाकाशमित्यादि १९, व्यवहितं नाम अन्तर्हितं, यत्र प्रकृतमुत्सृज्याप्रकृतं विस्तरतोऽभि-
धाय पुनः प्रकृतमधिक्रियते, यथा हेतुकथामधिकृत्य सुप्तिङन्तपदलक्षणप्रपञ्चमर्थशास्त्रं चाभिधाय पुनर्हेतुवचनं २०, का-
लदोषः अतीतादिकालव्यत्ययः, यथा रामो वनं प्राविशदिति वक्तव्ये प्रविशतीत्याह २१, यतिदोषः अस्थानविच्छेदः
अकरणं वा २२, छविः अलंकारविशेषता तेन शून्यता छविदोषः २३, समयविरुद्धं—स्वसिद्धान्तविरुद्धं, यथा साङ्ख्यस्या-
सत् कारणे कार्यं सद्वैशेषिकस्य इत्यादि २४ वचनमात्रमहेतुकं, यथा विवक्षिते भूप्रदेशे इदं लोकमध्यमिति २५ अर्थापत्तिदोषो
यत्रार्थादनिष्टापत्तिर्यथा ब्राह्मणो न हन्तव्य इत्यर्थादब्राह्मणघातापत्तिः २६ असमासदोषो नाम समासव्यत्ययो, यदिवा

१ यद्यपि सर्वजातीनामपीति वृद्धा इति छन्दोऽनुशासनवचसा सर्वेषां छन्दसां संकरः स्यात्, परं स एकप्रकरणोक्तानां ज्ञेयः, इमे आर्यावैतालीये भिन्नप्रकरणगते इति दोषवत्ता ।

यत्र समासविधौ सत्यसमासवचनं, यथा राजपुरुषोऽयमित्यत्र तत्पुरुषे समासे कर्त्तव्ये विशेषणसमासकरणं बहुव्रीहिकरणं वा, यदिवा असमासकरणं राज्ञः पुरुषोऽयमिति २७ उपमादोषो हीनाधिकोपमाभिधानं, यथा मेरुः सर्षपोपमः, सर्षपो मेरुसमः, बिन्दुः समुद्रोपमः समुद्रो बिन्दूपम इत्यादि २८, रूपकदोषो नाम स्वरूपावयवव्यत्ययो, यथा पर्वते पर्वतरूपावयवानामनभिधानं समुद्रावयवानां चाभिधानमित्यादि २९, निर्देशदोषो यत्र उद्दिश्यपदानामेकवाक्यभावो न क्रियते, यथा देवदत्तः स्थाल्यामोदनं पचतीति वक्तव्ये पचतिशब्दानभिधानं ३०, पदार्थदोषो यत्र वस्तुपर्यायवाचिनः पदार्थस्यार्थान्तरपरिकल्पनाश्रयणं यथा द्रव्यपर्यायवाचिनां सत्तादीनां द्रव्यादर्थान्तरपरिकल्पनमुलूकस्य ३१, सन्धिदोषो—विश्लिष्टसंहितत्वं सन्ध्यभावो वा ३२, एते द्वात्रिंशत् सूत्रदोषा भवन्ति ज्ञातव्याः, एभिर्विंयुक्तं द्वात्रिंशद्दोषरहितं लक्षणयुक्तं सूत्रं तत् इति वाक्यशेषः, द्वात्रिंशद्दोषरहितं यच्चेति वचनाद्धि तच्छब्दनिर्देशो गम्यत एव, तथाऽष्टभिर्गुणैरुपेतं यत् तल्लक्षणयुक्तमिति वर्त्तते ॥ ते चाष्टौ गुणा इमे—

निद्दोसं सारवंतं च, हेउजुत्तमलंकियं । उवणीयं सोवयारं च, मियं महुरमेव य ॥ ८८५ ॥

निर्दोषं नाम प्रागुक्तसमस्तदोषरहितं, सारवत्—बहुपर्यायं, सामायिकशब्दवत्, अन्वयव्यतिरेकलक्षणा हेतवस्तैर्युक्तं हेतुयुक्तं, अलङ्कृतम्—उपमादिभिरुपेतं, उपनीतम्—उपनयोपसंहृतं, सोपचारम्—अग्राम्याभिधानं, मितं—नियतवर्णादिपरिमाणं, मधुरं—श्रवणमनोहरं ॥ अथवेदं सर्वज्ञभाषितसूत्रलक्षणं—

अप्पक्खरमसंदिद्धं सारवं विस्सतोमुहं । अत्थोभमणवज्जं च, सुत्तं सव्वन्नुभासियं ॥ ८८६ ॥

अल्पाक्षरं नाम मिताक्षरं, यथा सामायिकसूत्रं, असन्दिग्धं यत् सैन्धवशब्दवत् लवणपटघोटकाद्यनेकार्थसंशयकारि न भवति, सारवत्—बहुपर्यायं, प्रतिमुखमनेकार्थाभिधायकं वा, विश्वतोमुखं—अनेकमुखं, प्रतिसूत्रमनुयोगचतुष्टयाभिधानात्, अस्तोभकं चवावैहहिकारादिपदच्छिद्रपूरणस्तोभकशून्यं, स्तोभका निपाता इति पूर्ववैयाकरणेषु प्रसिद्धेः, अनवद्यम्—अगर्ह्यमहिंसाप्रतिपादकं, न 'षट् शतानि नियुज्यन्ते, पशूनां मध्यमेऽहनि। अश्वमेधस्य वचनात्, न्यूनानि पशुभिस्त्रिभिः ॥ १ ॥' इत्यादिवचनमिव हिंसाभिधायकं, एवंभूतं सूत्रं सर्वज्ञभाषितमिति ॥ ततः सूत्रानुगमात् सपदच्छेदसूत्रोच्चारणरूपात् सूत्रेऽनुगते, किमुक्तं भवति ?, अनवद्यमिति निश्चिते सूत्रपदनिक्षेपलक्षणः सूत्रालापकन्यासः प्रवर्त्तते, तदनन्तरं सूत्रस्पर्शिकनिर्युक्तिः चरमानुयोगद्वारा विहिता नयाश्च भवन्ति, समकं चैतत्प्रतिसूत्रमनुगच्छति, तथा चाह भाष्यकृत्—सुत्तं सुत्ताणुगमो सुत्तालावगकतो य निक्खेवो। सुत्तप्फासियनिज्जुत्ति नया य समगं तु वच्चंति ॥ १ ॥ (वि. २८०१)

सूत्रानुगमादीनां त्वयं विषयविभागः—सपदच्छेदं सूत्रमभिधाय भवति सूत्रानुगमोऽवसितप्रयोजनः, सूत्रालापकन्यासोऽपि नामादिनिक्षेपमात्रमेवाभिधाय, सूत्रस्पर्शिकनिर्युक्तिस्तु पदार्थविग्रहविचारप्रत्यवस्थानाद्यभिधाय, तच्च प्रत्यवस्थानादि प्रायो नैगमादिनयमतविषयमतो वस्तुतस्तदन्तर्भाविन एव नया इति, न चैतत् स्वमनीषिकाविजृम्भितम्, यत आह भाष्यकारः—होइ कयत्थो वोत्तुं सपयच्छेयं सुयं सुयाणुगमो । सुत्तालावगनासो नामादिन्नासविणिओगं ॥१॥ (वि.१००९) सुत्तप्फासियनिज्जुत्तिनियोगो सेसओ पयत्थादी। पायं सोच्चिय नेगमनयाइमयगोयरो होइ ॥२॥ (वि. १०१०)

आह—यद्येवं क्रमस्ततः किमित्युत्क्रमेण निक्षेपद्वारे सूत्रालापकन्यासोऽभिहितः ?, उच्यते, निक्षेपसामान्यात्, एवं हि

प्रतिपत्तिलाघवं भवतीत्यलं प्रसङ्गेन ॥ तदेवं विनेयजनानुग्रहार्थं नयानुगमादीनां प्रसङ्गतो विषयविभागः प्रदर्शितः, अधुना प्रकृतं प्रस्तुमः, तत्र प्रकृतमिदं–सूत्रानुगमे सूत्रमुच्चारणीयम्, तच्च पञ्चनमस्कारपूर्वकं, तस्याशेषश्रुतस्कन्धान्तर्गतत्वात्, ततोऽसावेव सूत्रादौ व्याख्येयः, सूत्रादित्वात्, सर्वसम्मतसामायिकसूत्रादिवचनवत्, सूत्रादिता चास्य निर्युक्तिकृता सूत्रादौ व्याख्यायमानत्वादवसेया, अन्ये तु व्याचक्षते–मङ्गलत्वादेवायं सूत्रादौ व्याख्यायते, तथाहि–त्रिविधं मङ्गलं–आदौ मध्येऽवसाने च, तत्र आदिमङ्गलार्थं नन्दी व्याख्याता, मध्यमङ्गलार्थं तीर्थङ्करादिगुणाभिधायकः 'तित्थयरे भयवंते' इत्यादिगाथासमूहः, नमस्कारस्त्ववसानमङ्गलार्थं इति, एतच्चायुक्तं, शास्त्रस्यापरिसमाप्तत्वेनावसानत्वायोगात्, न चादिमङ्गलत्वमप्यस्योपपन्नं, तस्य कृतत्वात्, करणे चानवस्थाप्रसङ्गात्, यदिवा कृतं परबुद्धिमान्द्यप्रदर्शनेन, न खल्वेष सतां न्यायः, ततो गुरुवचनात् यथावधारितं तत्त्वार्थमेव ब्रूमः, सूत्रादिर्नमस्कारः, अतस्तमेव प्राग्व्याख्याय सूत्रं व्याख्यास्यामः, स चोत्पत्त्याद्यनुयोगद्वारानुसारतो व्याख्येय इति नमस्कारनिर्युक्तिप्रस्तावनीमिमामाह गाथां निर्युक्तिकारः—

उप्पत्ती १ निक्खेवो २ पयं ३ पयत्थो ४ परूवणा ५ वत्थू ६।
अक्खेव ७ पसिद्धि ८ कमो ९ पओअण १० फलं ११ नमुक्कारो ॥ ८८७ ॥

उत्पदनमुत्पादः प्रसूतिरुत्पाद इत्यर्थः, सोऽस्य नमस्कारस्य नयानुसारतश्चिन्तनीयः, तथा निक्षेपणं निक्षेपो–न्यासः, स चास्य कार्यः, पद्यतेऽनेनेति पदं, तच्च पञ्चधा–नामिकं नैपातिकं औपसर्गिकमाख्यातिकं मिश्रं च, तत्र अश्व इत्यादि नामिकं, च वा ह अह इत्यादि नैपातिकं, प्र परा इत्यादि औपसर्गिकं, पठति भुङ्क्ते इत्याद्याख्यातिकं, संयत इत्यादि मिश्रं, तदस्य

यथासम्भवं वाच्यं, तथा पदस्यार्थः पदार्थः, स चास्य वाच्यः, तथा किमाद्यनुयोगद्वारैश्च प्रकर्षेण रूपणा प्ररूपणा, सा च दुविहा परूवणेत्यादि विधेया, तथा वसन्त्यस्मिन् गुणा इति वस्तु तत् नमस्कारार्थं वाच्यम्, आक्षेपणमाक्षेपः, आशङ्केत्यर्थः, सा चास्य कार्या, तथा प्रसिद्धिः—तत्परिहाररूपा वक्तव्या, क्रमः—अर्हदाद्यभिधेयपरिपाटी, प्रयोजनम्—अर्हदादिक्रमस्य कारणं, अथवा येन प्रयुक्तो नमस्कारे प्रवर्त्तते तत् नमस्कारस्य प्रयोजनमपवर्गाख्यं वक्तव्यं, फलं—नमस्कारक्रियानन्तरभावि स्वर्गादिकं निरूपणीयं, अन्ये तु व्यत्ययेन प्रयोजनफलयोरर्थं प्रतिपादयन्ति, नमस्कारः खल्वेभिर्द्वारैश्चिन्तनीयः, एष गाथासमुदायार्थः ॥ तत्र 'यथोद्देशं निर्देश' इति न्यायमाश्रित्य प्रथमत उत्पत्तिद्वारनिरूपणार्थमाह—

उप्पन्नाणुप्पन्नो इत्थ नयाऽऽइणेगमस्सऽणुपन्नो। सेसाणं उप्पन्नो जइ कत्तो? तिविहसामित्ता ॥ ८८८ ॥

उत्पन्नश्चासावनुत्पन्नश्च उत्पन्नानुत्पन्नः 'मयूरव्यंसकादय' इति विशेषणसमासः यथा कृताकृतं भुक्तमभुक्तमित्यादि, एवंप्रकारश्च समासः स्याद्वादिनामेव युक्तिमियर्त्ति, न शेषस्य एकान्तवादिनः, एकत्रैकदा परस्परविरुद्धधर्मानभ्युपगमात्, अथ स्याद्वादिनोऽपि कथमेकत्रैकदा परस्परविरुद्धधर्माध्यास इत्यत आह—'एत्थ नया' इति, अत्र उत्पत्त्यनुत्पत्तिविषये नयाः प्रवर्त्तन्ते, ते च नैगमादयः सप्त, नैगमो द्विभेदः—सर्वसङ्ग्राही देशसङ्ग्राही च, तत्र सर्वसङ्ग्राहिणो नैगमस्य सामान्यमात्रावलम्बित्वात् सामान्यस्य चोत्पादव्ययरहितत्वात् नमस्कारस्यापि च तदन्तर्गतत्वादनुत्पन्नो नमस्कारः, शेषाणां देशसङ्ग्राहिनैगमप्रभृतीनां उत्पन्नः, शेषा हि विशेषग्राहिणः विशेषाश्चोत्पादव्ययशून्यस्य वान्ध्येयादेरिवावस्तुत्वात्, नमस्कारश्चायं वस्त्विति विशेषत्वादुत्पन्न इति। आह—शेषा देशसङ्ग्राहिनैगमसङ्ग्रहादयः, सङ्ग्रहस्य च विशेषग्राहित्वं न विद्यते, ततः कथमुक्तं शेषा-

णासुत्पन्न इति ?, नैष दोषः, तस्य सर्वसङ्ग्राहिनैगम एवान्तर्भावविवक्षणात् । 'जइ कत्तो'त्ति यदि उत्पन्नस्तर्हि कुत इत्याह—'तिविहसामित्ता' इति, त्रिविधं च तत् स्वामित्वं च त्रिविधस्वामित्वं तस्मात् त्रिविधस्वामित्वात्, त्रिविधस्वामिभावात् त्रिविधकारणादित्यर्थः, आह च—एवमप्येकत्रैकदा परस्परविरुद्धधर्माध्यासदोषस्तदवस्थ एव, तदयुक्तम्, अशेषस्यापि वस्तुनस्तत्त्वतः सामान्यविशेषात्मकत्वाभ्युपगमे नमस्कारस्यापि सामान्यविशेषात्मकत्वात्, तत्र च सामान्यधर्मैः सत्त्वादिभिरनुत्पादात् विशेषधर्म्मैरानुपूर्व्यादिभिरुत्पादादिति ॥ साम्प्रतं यदुक्तं 'त्रिविधस्वामित्वा'दिति तत् त्रिविधस्वामित्वमुपदर्शयति—

समुट्ठाणवायणालद्धिओ य पढमे नयत्तिए तिविहं । उज्जुसुअ पढमवज्जं सेसनया लद्धिमिच्छंति ॥ ८८९ ॥

समुत्थानतो वाचनातो लब्धितश्च नमस्कारः, समुत्पद्यते इति वाक्यशेषः, तत्र सम्यक् सङ्गतं प्रशस्तं वा उत्थानं यस्मात् तत् समुत्थानं, किं तदिति चेत्, उच्यते, अन्यस्याश्रुतत्वात् तदाधारतया प्रत्यासन्नत्वात् शरीरमत्र परिगृह्यते, शरीरं हि नमस्कारकारणं, तद्भावे भावसम्भवात, ततः समुत्थानतः, तथा वाचनं वाचना—परतः श्रवणमधिगम उपदेश इत्यनर्थान्तरं, सा च नमस्कारकारणं, तद्भावभावित्वादेव च, ततो वाचनातः, तथा लब्धिः—तदावरणकर्मक्षयोपशमलक्षणा साऽपि कारणं तद्भावभावित्वादेव, ततो लब्धितः, चशब्दः पदत्रयान्तप्रयुक्तो नयापेक्षया त्रयाणामपि प्राधान्यख्यापनार्थः, अत एवाह—'पढमे नयत्तिए तिविहं' प्रथमे नयत्रिके त्रिविधं, अशुद्धनैगमसङ्ग्रहव्यवहाराख्ये विचार्ये समुत्थानादिकं त्रिविधमपि नमस्कारकारणं, आह—प्रथमे नयत्रिकेऽशुद्धनैगमसङ्ग्रहौ कथं त्रिविधं कारणमिच्छतः ?, तयोः सामान्यमात्रावलम्बित्वात्, नैष दोषः, अशुद्धनैगमसङ्ग्रहयोर्नयत्रिकग्रहणेनाग्रहणात्, तन्मतेन नमस्कारस्योत्पत्तेरेवाभावात्,

एतच्च प्रागेव 'नैगमस्सऽणुप्पन्नो' इत्यत्र चर्चितम्, 'उज्जुसुय पढमवज्जं'ति ऋजुसूत्रः प्रथमवर्जं-समुत्थानाख्यकारण-शून्यं शेषं कारणद्वयमेवेच्छति, समुत्थानस्य व्यभिचारित्वात्, तद्भावेऽपि वाचनालब्धिशून्यस्यासम्भवात्, 'सेस नया लद्धिमिच्छन्ती'ति शेषनयाः-शब्दादयस्ते लब्धिमेवैकं कारणमिच्छन्ति, वाचनाया अपि व्यभिचारित्वात्, तथाहि-सत्यामपि वाचनायां नोपजायते लब्धिरहितस्य गुरुकर्म्मणोऽभव्यस्य वा नमस्कारः, सत्यां तु लब्धाववश्यमुपजायते, ततोऽन्वयव्यतिरेकाव्यभिचारात्सैवैका कारणमिति, गतमुत्पत्तिद्वारम्। इदानीं निक्षेपः-स चतुर्धा, तद्यथा-नामनमस्कारः स्थापनानमस्कारो द्रव्यनमस्कारो भावनमस्कारश्च, तत्र नामस्थापने सुगमे, द्रव्यनमस्कारोऽप्यागमतो नोआगमतश्च, तत्रागमतो ज्ञशरीरद्रव्यनमस्कारो भव्यशरीरद्रव्यनमस्कारो ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यनमस्कारश्च ॥ सम्प्रति ज्ञशरीरभव्यशरीरद्रव्यनमस्कारप्रतिपादनार्थमाह—

निण्हाइ दव्व भावोवउत्त जं कुज्ज सम्मदिट्ठीओ।

निह्नवानाम्, आदिशब्दात् बोटिकानामाजीविकानां, यदिवा द्रव्यनिमित्तं यो मंत्रदेवताराधनादौ नमस्कारः स द्रव्यनमस्कारः, तत्र द्रव्यनमस्कारे उदाहरणम्-वसंतउरे नगरे जियसत्तू राया, धारणी देवी, सो अन्नया देवीए सहितो ओलोयणट्ठितो दमगं पासइ, अणुकंपा दोण्हवि जाया, देवी भणइ-नदिसरिसा रायाणो, भरियाइं भरंति, रण्णा आणावितो, कयालंकारो दिन्नवत्थो तेहिं उवणीतो, सो य कच्छूए गहितल्लतो ओलग्गाविज्जइ, कालंतरेण राइणा से रज्जं दिन्नं, पेच्छइ दंडभडभोइए देवतायतणपूयातो करेमाणे, सो चिंतेइ-अहं कस्स करेमि ?, रण्णो आययणं करेमि, तेण देवउलं

कारियं, तत्थ रण्णो देवीए य पडिमा कया, पडिमापवेसे राया देवी य आणीया, ताणि पुच्छंति–किं एयं ?, सो साहइ, तुट्ठो राया, सविसेसं सक्कारेइ, सो तिसंझं पडिमातो अच्चेइ, राया पडियरइ, ततो तुट्ठेण राइणा से सबट्ठाणगाणि विइन्नाणि, अन्नया राया दंडजत्ताए गतो तं सबंतेऊरट्ठाणेसु ठविऊणं, तत्थवि अंतेउरियाओ निरोहमसहमाणीतो तं चेव उवचरंति, सो नेच्छइ, ताहे तातो भत्तगं नेच्छंति, पच्छा सणियं पविट्ठो विट्टालितो य, राया आगतो, सिट्ठे विणासितो, रायसमाणो तित्थयरो, अंतेउरत्थाणीया छकाया, अहवा न छकाया, किन्तु संकादयो पमाया, मा सेणियादीणवि दबनमोकारो भविस्सति, दमगत्थाणीया साहू, कच्छूथाणीयं मिच्छत्तं, दंडो संसारे विणिवातो, एस दबनमोक्कारो, 'भावोवउत्त जं कुज्ज सम्मदिट्ठीओ' भावनमस्कारो मनोवाक्कायैरुपयुक्तः सन् यत्सम्यग्दृष्टिः करोति शब्दक्रियादिकं ॥ अत्र च नामादिनिक्षेपाणां यो नयो यं निक्षेपमिच्छति तद् उपदर्श्यते–नैगमसङ्ग्रहव्यवहारऋजुसूत्राश्चतुरोऽपि निक्षेपान् मन्यन्ते, शब्दसमभिरूढैवंभूतास्तु भावनिक्षेपमेव केवलम्, आह च भाष्यकृत्–"भावं चिय सद्दनया सेसा इच्छंति सवनिक्खेवे" ॥ अन्ये पुनरेवं व्याचक्षते–नैगमश्चतुरोऽपि निक्षेपानिच्छति, सङ्ग्रहव्यवहारौ स्थापनावर्ज्जान् त्रीन् निक्षेपान्, ऋजुसूत्रः स्थापनाद्रव्यवर्जौ द्वौ निक्षेपौ, तद्यथा–नामनिक्षेपं भावनिक्षेपं च, त्रयः शब्दा भावनिक्षेपमेव केवलमिच्छन्ति, न शेषान् त्रीन्, तथा च तेषां ग्रन्थः–'चउरोऽवि नेगमनयो ववहारो संगहो ठवणवज्जं । उजुसुत्त पढमचरिमे इच्छति भावं तु सद्दनया ॥ २ ॥' तदेतदयुक्तं, युक्तिविरोधात्, तथाहि–नैगमनयो यदि सामान्यग्राही विशेषग्राही च निर्विवादमविशेषेण स्थापनामिच्छति ततः सामान्यग्राही सङ्ग्रहनयो विशेषावलम्बी च व्यवहारनयः कथं स्थापनां नेच्छेत्?, सर्वदेशसङ्ग्राहिनैगमनयमतापेक्षया सङ्ग्र-

हव्यवहारनयमतयोरविशेषात् एतच्चावसीयते, तत्र तत्र प्रदेशे सर्वसङ्ग्राहिणो नैगमस्य सङ्ग्रहे देशसङ्ग्राहिणो व्यवहारेऽन्तर्भा-
वविवक्षणात्, यदप्यवादीत्–स्थापनाद्रव्यवर्जौ द्वौ निक्षेपाविच्छति ऋजुसूत्र इति, तदप्यसमीचीनं, सम्यक् तत्त्वानभिज्ञा-
नात्, तथाहि–स्थापना नाम द्रव्यस्याकारविशेषः, द्रव्यं च ऋजुसूत्रनयोऽवश्यमिच्छति, केवलं न पृथक्त्वं, अतीतानागतयो-
र्विनष्टानुत्पन्नत्वेन परकीयस्यानुपयोगित्वेनावस्तुत्वाभ्युगमात्, उक्तं चानुयोगद्वारेषु–"उज्जुसुयस्स एगे अणुवउत्ते आग-
मतो एगं दव्वावस्सयं, पुहुत्तं नेच्छइ" इति, तद् यदि द्रव्यं सुवर्णादिकं पिण्डाद्यवस्थायां तथाविधकटककेयूराद्याकाररहित-
तया निराकारमपीच्छति, भविष्यत्कुण्डलादिपर्यायलक्षणभावहेतुत्वात्, ततः साक्षात्तत् साकारं (कथं) नेच्छेत् ?, तस्य
ननु सुतरामभ्युपगमः, तस्मात् ऋजुसूत्रोऽपि नैगमनय इव चतुरोऽपि निक्षेपानिच्छतीति प्रतिपत्तव्यमित्यलं परमान्ध्यप्रका-
शनेन ॥ गतं निक्षेपद्वारम्, तत्र पञ्चसु नामिकादिषु पदेषु यन्नमस्कारे पदं तदुपदर्शयन्नाह–

नेवाइयं पदं दव्वभावसंकोअणपयत्थो ॥ ८९० ॥

निपतत्यर्हदादिपदपर्यन्तेष्विति निपातः, निपाते भवं नैपातिकम्, अध्यात्मादित्वादिकण्, यदिवा निपात एव नैपातिकं, विनयादेराकृतिगणत्वात् स्वार्थिक इकण्, तत्र नम इति नैपातिकं पदं ॥ गतं पदद्वारम्, अधुना पदार्थद्वारमाह–'दव्वभा-संकोयणपयत्थो' नम इति 'णमू प्रह्वत्वे' नमनं नमः, औणादिकोऽसुप्रत्ययः, अस्यार्थः–पूजा द्रव्यभावसङ्कोचनलक्षणा, तत्र द्रव्यसङ्कोचनं करशिरःपाद्याद्यवयवसङ्कोचः, भावसङ्कोचनं विशुद्धस्य मनसो व्यापारः, सूत्रे चैवं समासः–द्रव्यभावस-ङ्कोचनात्मकः पदार्थो द्रव्यभावसङ्कोचनपदार्थः, शाकपार्थिवादिदर्शनात् मध्यपदलोपी समासः, एष चात्र भावार्थः–नमोऽ-

ईत्थ इति किमुक्तं भवति ?–द्रव्यभावसङ्कोचलक्षणां भगवतामर्हतां पूजां करोमि, द्रव्यभावसङ्कोचनविषये च भङ्गचतुष्टयं, द्रव्यसङ्कोचनं न भावसङ्कोचनमित्येको भङ्गो, यथा पालकस्य, भावसङ्कोचनं न द्रव्यसङ्कोचनमिति द्वितीयो, यथाऽनुत्तरविमानवासिनां देवानां, द्रव्यभावयोः सङ्कोचनमिति तृतीयो यथा शांबस्य, न द्रव्यसङ्कोचनं न भावसङ्कोचनमिति शून्यो भङ्गः, इह भावसङ्कोचनं प्रधानं, द्रव्यसङ्कोचनं तु तद्बुद्धिनिमित्तं प्रधानं, केवलं तु विफलमेव ॥ गतं पदार्थद्वारम्, अधुना प्ररूपणाद्वारप्रतिपादनार्थमाह—

दुविहा परूवणा छप्पया य नवहा य छप्पया इणमो । किं कस्स केण व कहिं केवच्चिरं कइविहो अ भवे ? ॥८९१॥

द्विविधा–द्विप्रकारा प्ररूपणा–वर्णना, द्वैविध्यमेव दर्शयति–षट्पदा च नवधा–नवप्रकारा, नवपदेति तात्पर्यार्थः, चशब्दात् पञ्चपदा च, तत्र षट्पदा इणमो–इयं, किं कस्याः केन वा क्व वा कियच्चिरं कतिविधो वा भवेन्नमस्कारः ? ॥ तत्र किंद्वारप्रतिपादनार्थमाह—

किं ?, जीवो तप्परिणओ (१) पुव्वपडिवन्नओ उ जीवाणं । जीवस्स व जीवाण व पडुच्च पडिवज्जमाणं व (तु) ॥८९२॥

किंशब्दः क्षेपप्रश्ननपुंसकव्याकरणेषु, तत्रेह प्रश्ने, अयं च प्राकृतेऽलिङ्गः, सर्वादिः, नपुंसकनिर्देशः, सर्वलिङ्गैः सह यथायोगमभिसम्बध्यते, किं सामायिकं ? को नमस्कारः ?, तत्र नैगमादिनयानामविशुद्धानां मतमधिकृत्याजीवादिव्युदासेनाह–जीवो, नाजीवः, स च सङ्ग्रहनयापेक्षया मा भूदविशिष्टः स्कन्धः, स्कन्धो नाम सर्वास्तिकायसङ्घातः, यदाहुस्तन्मतावलम्बिनः–"पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति" इत्यादि, तथा तन्नयवि-

शेषापेक्षयैव मा भूदविशिष्टो ग्रामस्ततो नोस्कन्धो नोग्राम इति वाक्यशेषो द्रष्टव्यः, तथाहि–सर्वास्तिकायमयः स्कन्धः, तदेकदेशो जीवः, स चैकदेशत्वात् स्कन्धो न भवति, अनेकस्कन्धापत्तेः, प्रतिजीवं स्कन्धत्वाभ्युपगमात्, अस्कन्धोऽपि न भवति, स्कन्धान्तर्वर्त्तित्वाद्, अन्यथा स्कन्धाभावप्रसङ्गात्, प्रत्येकमस्कन्धत्वात्, अनभिलाप्योऽपि न भवति, वस्तुविशेषत्वात्, तस्मात् नोस्कन्धः, स्कन्धैकदेश इति भावः, स्कन्धदेशविशेषताद्योतको नोशब्दः, एवं नोग्रामोऽपि भावनीयः, नवरं ग्रामो नाम चतुर्दशभूतग्रामसमुदायः, स चतुर्दशभूतग्रामः पर्याप्तसूक्ष्मैकेन्द्रियादयः, यद् वक्ष्यति–"एगिंदिय सुहुमियरा सन्नियरपणिंदिया य सवितिचऊ। अपज्जत्ता पज्जत्ता भेदेणं चउद्दसग्गामा ॥ (प्रति. सं.) ॥ १ ॥" कृतं प्रसङ्गेन, प्रकृतं प्रस्तुमः, तत्र सामान्येनाशुद्धनयानां नैगमादीनां जीवोऽनुपयुक्तोऽपि तज्ज्ञानलब्धियुक्तो योग्यो वा नमस्कारः, नमस्कारनमस्कारवतोरभेदोपचाराच्चैवं निर्देशः, सम्प्रति शब्दादिशुद्धनयमतमधिकृत्याह–'तप्परिणतो' इति, जीव इति वर्त्तते, शब्दादिनयाः प्राहुः–जीवस्तत्परिणतो–नमस्कारपरिणत एव नमस्कारो भवति, नापरिणतः, उक्तं च–"तप्परिणामोच्चिय ततो सद्दाईणं तया नमोकारो। सेसाणमणुवउत्तो व लद्धिसहितोऽहवा जोगो ॥ १ ॥" एकत्वानेकत्वचिन्तायां तु नैगमस्य सामान्यग्राहिणः सङ्ग्रहे विशेषग्राहिणो व्यवहारेऽन्तर्भावविवक्षणात् सङ्ग्रहादिभिरेव षड्भिर्नयैर्विचारः, तत्र सङ्ग्रहस्य नमस्कारजातिमात्राक्षेपादेको नमस्कारः, व्यवहारस्य व्यवहारपरतया व्यक्तिभेदेन बहवो नमस्काराः, ऋजुसूत्रादयस्तु स्वकीयवर्त्तमानमात्राभ्युपगमपरतया प्रत्येकमेकमेव नमस्कारमिच्छन्ति, तमपि चोपयुक्तमिति, उक्तं च–"संगहनतो नमोकारजातिसामन्नतो सया एगं। इच्छइ ववहारो पुण एगमिहेगं बहू बहवो ॥ १ ॥ उज्जुसुयाईणं पुण जेण सयं संपयं च

वत्थुंति । पत्तेयं पत्तेयं तेण नमोकारमिच्छंति ॥ २ ॥" अत्र 'एगमिहेग'मित्यादि, एकं—नमस्कारवन्तमिह—जीवलोके एकं नमस्कारमिच्छति, बहून् नमस्कारवतो जीवान् बहून्नमस्कारानिति, गतं किमिति द्वारं । सम्प्रति कस्येति द्वारम्, तत्र प्राक्प्रतिपन्नप्रतिपद्यमानकाङ्गीकरणतः प्ररूपणामाह—'पुव्वपडिवन्नतो उ जीवाण'मित्यादि, इह यदा पूर्वप्रतिपन्न एवाधिक्रियते तदा व्यवहारनयमतमाश्रित्य जीवानां विज्ञेयो, बहुजीवस्वामिक इत्यर्थः, प्रतिपद्यमानं तु प्रतीत्य जीवस्य जीवानां वा नमस्कारः, यदा एको जीवो नमस्कारं प्रतिपद्यते तदा जीवस्येति, यदा तु बहवो जीवास्तं प्रतिपद्यन्ते तदा जीवानामिति अक्षरगमनिका, भावार्थस्त्वयम्—सङ्ग्रहनयस्य पूर्वप्रतिपन्नचिन्तायां प्रतिपद्यमानकचिन्तायां च एकस्वामिक एव नमस्कारो, जातिमात्राभ्युपगमात्, शेषनयानां तु व्यवहारादीनां प्रतिपद्यमानको नमस्कारस्यैको वा जीवोऽनेके वा, पूर्वप्रतिपन्नास्तु नियमेनानेके, तेषां गतिचतुष्टयेऽपि मार्गणायामसङ्ख्येयानां सदैव लाभात्, आह च—'पडिवज्जमाणतो पुण एगोऽणेगे व संगहं मोत्तुं । इट्ठो सेसनयाणं पडिवन्ना नियमतोऽणेगा ॥ १ ॥" इह ऋजुसूत्रादयोऽविशुद्धाः प्रतिपत्तव्याः, अनेकाभ्युपमात्, अन्यथा परकीयानभ्युपगमेनानेकाभ्युपगमानुपपत्तेः, अथ नमस्करणं नमस्कारः, नमस्करणक्रिया च सकर्म्मिका, ततः संशयः—किमसौ नमस्कारो नमस्कृतिक्रियानिष्पादकस्य कर्त्तुः उत नमस्कार्यस्य पूज्यस्य ?, उच्यते, अत्र नयैर्विचारः, तत्र नैगमव्यवहारनयमतं नमस्कार्यस्य नमस्कारो, न नमस्कर्त्तुः, तस्य तदुपभोगाभावात्, तथाहि—यद्यपि नाम नमस्कारक्रियानिष्पादकः कर्त्ता तथापि नासौ तं नमस्कारमुपभुङ्क्ते, किन्तु नमस्कार्य एव, ततो यथा भिक्षानिष्पादकोऽपि दाता न तामुपभुङ्क्ते इति तस्य न भिक्षा, किन्तु भिक्षोः, एवं नमस्कारोऽपि नमस्कार्यस्यैव, नतु नमस्कर्त्तुरिति, नमस्कार्यं तु वस्तु

द्विविधं—जीवरूपमजीवरूपं च, जीवरूपं जिनादि अजीवरूपं तत्प्रतिमादि, जीवाजीवपदाभ्यां चैकवचनबहुवचनाभ्यामष्टौ भङ्गाः, तद्यथा—जीवस्य १ अजीवस्य २ जीवानां ३ अजीवानां ४ जीवस्याजीवस्य च ५ जीवस्याजीवानां च ६ जीवानामजीवस्य च ७ जीवानामजीवानां च ८, अत्रोदाहरणानि—'जीवस्स सो जिणस्स उ अज्जीवस्स उ जिणिंदपडिमाए। जीवाण जईणंपि व अज्जीवाणं तु पडिमाणं ॥१॥ जीवस्साजीवस्स य जइणो विंवस्स वेगतो समयं। जीवस्साजीवाण य जइणो पडिमाण वेगत्थ ॥२॥ जीवाणमजीवस्स य जईण बिंवस्स वेगतो समयं। जीवाणमजीवाण य जईण पडिमाण वेगत्थ ॥ २ ॥' ननु प्राक् सर्वनयमताभिप्रायेणेदमुक्तं—'जीवो नमस्कारः' केवलं केषांचिन्नयानामभिप्रायेण सामान्येन जीवः अपरेषां नमस्कारक्रियापरिणतः, अत्र तु विपरीतार्थकथनमिति कथं न विरोधः?, नैष दोषः, नमस्कारो हि प्रागुक्तयुक्तिभिः सर्वनयमताभिप्रायेण जीव एव, जीवादन्यस्य नमस्कारक्रियाकर्तृत्वायोगात्, केवलं स जीवकर्तृकोऽपि सन् कस्याबुपयोगद्वारेणाभवतीति स्वामित्वचिन्तामात्रमत्र क्रियते, ततो न कश्चिद्दोषः, आह च भाष्यकृत्—"जीवोत्ति नमोकारो नणु सव्वमयं कहं पुणो भेओ?। इह जीवस्सेव सतो भन्नइ सामित्तचिंतेयं ॥ १ ॥" सङ्ग्रहनयस्तु सामान्यमात्रग्राही, अत एव अयं स्वः अयं परः अयं जीवः अयमजीव इति विशेषणनिरपेक्षो नमस्कारं—नमःसामान्यमात्रमेकस्य स्वामिमात्रस्य जीवाजीवविशेषणरहितस्याभिमन्यते, न बहूनां, नापि बहुप्रभेदान्नमस्कारान्, न खलु स जीवस्यायं नमस्कारोऽयमजीवस्यायं स्वस्य अयं परस्येति स्वामिभेदान् कर्तृभेदान् वा नमस्कारस्यानुमन्यते, सामान्यमात्राक्षेपात्, उक्तं च—"सामन्नमेत्तगाही सपरजियेयरविसेसणोऽभिन्नो। न य भेयमिच्छइ सया स नमोसामन्नमेत्तस्स ॥ १ ॥" अथवा स सङ्ग्रहनयः सर्ववस्तूनां सर्वेषामपि च

धर्म्मधर्म्मिणामभेदमात्रमेवेच्छति, न भेदं, ततः कस्यासौ नमस्कार इति स्वामित्वचिन्तैव तन्मतेन नोपपद्यते, केवलं नमस्कारक्रियानिष्पादको जीवो, जीवाजीवानां च भेद इति, जीवो नमस्कार इति सर्वदैव तदभिप्रायेण तुल्याधिकरणता, अशुद्धतरो वा कश्चित् सङ्ग्रहो नमस्कारं सम्बन्धितयाऽभिमन्यमानो जीवस्येति प्रतिपद्यते, नाजीवस्य नापि जीवानामित्यादि, आह च–"जीवो नमोत्ति तुल्लाहिगरणयं वेइ नउ स जीवस्स । इच्छइ वाऽसुद्धयरो तं जीवस्सेव नऽन्नस्स ॥ १ ॥" ऋजुसूत्रमतं तु नमस्कारस्य ज्ञानक्रियाशब्दरूपत्वात् तेषां च कर्तुरनर्थान्तरत्वात् कर्तृस्वामिक एव नमस्कारो, न पूज्यस्वामिकः, आह च–"उज्जुसुयमयं नाणं सद्दो किरिया व जं नमोकारो । होज्ज नहि सव्वहा सो जुत्तो तक्कत्तुरन्नस्स ॥ १ ॥" शब्दादिनयाः प्राहुः–ज्ञानमेव नमस्कारो, न शब्दक्रिये, व्यभिचारात्; तथाहि–शब्दक्रियाविरहेऽपि भवति नमस्कारोपयोगमात्रादिष्टफलसिद्धिः, न तदभावे शब्दक्रियासद्भावेऽपीति; ततस्तन्मतेनोपयुक्तस्य कर्त्तुरेव नमस्कारो, न वाच्यस्य, आह च–"जं नाणं चेव नमो सद्दाईणं न सद्दकिरियातो । तेण विसेसेण तयं वज्झस्स न तेऽणुमन्नंति ॥१॥" कस्येतिद्वारं गतम्, अधुना केनेति द्वारमुच्यते–केन साधनेन साध्यते नमस्कारः ?, तत्रेयं गाथा—

नाणावरणिज्जस्स य दंसणमोहस्स तह खओवसमे । जीवमजीवे अट्ठसु भंगेसु अ होइ सव्वत्थ ॥ ८९३ ॥

ज्ञानावरणीयस्येति सामान्योक्तावपि मतिज्ञानावरणीयस्य श्रुतज्ञानावरणीस्य चेति द्रष्टव्यं, नमस्कारस्य मतिश्रुतज्ञानान्तर्गतत्वात्, ज्ञानं च सम्यग्दर्शनमृते न भवति, तत आह–'दर्शनमोहस्य' दर्शनमोहनीयस्य च यः क्षयोपशमस्तेन साध्यते नमस्कारः, तद्वशादवाप्यते नमस्कार इति भावः, तस्य च आवरणस्य द्विविधानि स्पर्द्धकानि भवन्ति–सर्वोपघातीनि

देशोपघातीनि च, सर्वं स्वावार्यं गुणमुपघ्नन्तीत्येवंशीलानि सर्वोपघातीनि, स्वावार्यस्य गुणस्य देशमुपघ्नन्तीत्येवंशीलानि देशोपघातीनि, तत्र सर्वेषु सर्वघातिषु स्पर्द्धकेषु उद्घातितेषु देशोपघातिनां च स्पर्द्धकानां प्रतिसमयशुद्ध्यपेक्षमनन्तैर्भागैः क्षयमुपगच्छद्भिर्विमुच्यमानः क्रमेण नमस्कारस्य प्रथमं नकारलक्षणमक्षरं लभते, एवमेकैकवर्णप्राप्त्या समस्तं नमस्कारं लभते "मइसुयनाणावरणं दंसणमोहं च तदुवघातीणि । तप्फड्डगाइं दुविहाइं सव्वदेसोवघाईणि ॥ १ ॥ सव्वेसु सव्वघाइसु हएसु देसोवघाइयाणं च । भागेहिं मुच्चमाणो समए समए अणंतेहिं ॥२॥ पढमं लहइ नकारं एकेकं वन्नमेवमन्नंपि । कमसो विसुज्झमाणो लभइ समत्तं नमोकारं ॥ ३ ॥ क्षयोपशमस्वरूपं चैवम्—उदयावलिकाप्रविष्टस्यांशस्य क्षयः, शेषस्य तूपशमः, उक्तं च—"खीणमुइन्नं सेसयमुवसंतं भन्नए खतोवसमो ॥" गतं केनेति द्वारम् । अधुना कस्मिन्निति द्वारावसरः, तत्र कस्मिन्निति सप्तमी अधिकरणे, अधिकरणं चाधारः, स च चतुर्भेदः, तद्यथा—व्यापक औपश्लेषिकः सामीप्यको वैषयिकश्च, तत्र व्यापको यथा तिलेषु तैलं, औपश्लेषिको यथा कटे आस्ते, सामीप्यको यथा गङ्गायां घोषः, वैषयिको यथा रूपे चक्षुः, तत्राद्योऽभ्यन्तरः, शेषा बाह्याः, अत्र नयैर्विचारः, तत्र नैगमव्यवहारौ बाह्यमिच्छतः, तन्मतानुवादि साक्षादिदं गाथाशकलं 'जीवमजीवे' त्यादि, जीवमजीव इति प्राकृतशैल्या अभूतस्यैवानुस्वारस्यागमः, तत्त्वत एष भावार्थः—जीवेऽजीवे इत्यादिष्वष्टसु भङ्गेषु भवति, सर्वत्र नमस्कार इति गम्यते, नमस्कारो हि जीवगुणत्वात् जीव एव, स च यदा गजेन्द्रादौ तदा जीवे, यदा कटादौ तदा अजीवे, यदा बहुषु पुरुषेषु तदा जीवेषु ३ यदा बहुषु कटादिषु तदा अजीवेषु ४ यदा एकस्मिन् घोटके आस्तरणे च तदा जीवेऽजीवे च ५ यदा एकस्मिन्नेव घोटके बहुष्वास्तरणेषु तदा जीवेऽजीवेषु ६ यदा बहुषु पुरुषेषु

षट्पदार्यां केनद्वारं कस्मिन्-द्वारं च

वाहकेष्वेकस्मिन् वाहने शिविकादौ तदा जीवेष्वजीवे च ७ यदा बहुषु पुरुषेषु वाहकेषु बहुषु च वाहनाङ्गेषु तदा जीवेष्वजीवेषु च ८। आह-पूज्यस्य नमस्कार इति नैगमव्यवहारौ, स एव च किमित्याधारो न भवति येन पृथगिष्यते ?, उच्यते, नावश्यं यत् यस्य सम्बन्धि तस्य स एवाधारः, अन्यथापि दर्शनात्, यथा देवदत्तस्य धान्यं क्षेत्रे, ततोऽत्रापि पृथगाधार इत्यष्टभङ्गी, तुशब्दात् शेषनयाक्षेपः, स विनेयजनानुग्रहाय सङ्क्षेपतो दर्श्यते, तत्र सङ्ग्रहनयः सामान्यमात्रग्राहितया स्वपरजीवेतरविशेषणरहित इति नमस्कारमाधारमात्रे अविशिष्टे इच्छति, आह च-"सामन्नमेत्तगाही सपरजिएयरविसेसनिरवेक्खो। संगहनओऽभिमन्नइ आहारे तमविसिट्ठंमि ॥ १ ॥" अपरस्तु जीवधर्मो नमस्कार इति जीवे एवाधारे, नाजीवे इति प्रतिपन्नः, यद्वाऽन्योऽन्यत्र वर्त्तते इति व्यधिकरणं सङ्ग्रहनयो मूलत एव नाभ्युपगच्छतीति तन्मते नाधिकरणचिन्ता, ऋजुसूत्रस्तु ज्ञानं शब्दः क्रिया वा नमस्कार इति प्रतिपन्नवान्, ज्ञानादयश्च जीवादनन्य इति जीव एव मन्यते नमस्कारं, नान्यत्र, ननु ऋजुसूत्रोऽन्यमप्याधारमिच्छत्येव 'आकाशे वसती'ति वचनात्, सत्यमेतत्, केवलं द्रव्यविवक्षायां न गुणविवक्षायामित्यदोषः, शब्दादयस्तु ज्ञानरूपमेव नमस्कारमिष्टवन्तः, न शब्दक्रियारूपं, अतो ज्ञानरूपे जीवे एवेच्छति, नान्यत्र, गतं कस्मिन्निति द्वारम्। अधुना कियच्चिरमसौ भवतीति निरूपयन्नाह—

उवओग पडुचंतोमुहुत्त लद्धीइ होइ उ जहन्नो। उक्कोस ट्ठिई छावट्ठि सागर (द्वारं) अरिहाइ पंचविहो (द्वारं६) ८९४

इह नमस्कारस्य कालचिन्ता द्विधा—उपयोगतो लब्धितश्च, तत्रोपयोगं प्रतीत्य स्थितिर्जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तमेव, 'लद्धीए' इत्यादि, लब्धेस्तु तदावरणक्षयरूपाया जघन्यतः स्थितिः अन्तर्मुहूर्त्तमेव, उत्कर्षतः षट्षष्टिसागरोपमाणि, साति-

रेकाणीति गम्यते, सम्यक्त्वकालो हि नमस्कारकालः, सम्यक्त्वकालश्चोत्कर्षतो लब्धिमधिकृत्य नरभवातिरेकाणि षट्षष्टिः
सागरोपमाणीति, एषा च चिंता एकं जीवमधिकृत्य, नानाजीवान् प्रति पुनः सर्वकालमिति ॥ द्वारम् । सम्प्रति 'कतिविहो वे'-
त्यस्य प्रश्नस्य निर्वचनार्थो गाथावयवः, 'अरिहाइ पंचविहो' इति, अर्हत्सिद्धाचार्योपाध्यायसाधुपदानामादौ सन्निपाता-
दर्हदादिपञ्चविधार्थसम्बन्धात् पञ्चविधो नमस्कारः, द्वारम् ॥ एतेन अर्थान्तरेण तत्त्ववृत्त्या नम इति पदस्याभिसंबन्धमाह ॥
गता षट्पदप्ररूपणा । सम्प्रति नवपदप्ररूपणाया अवसरः, तत्रेयं गाथा—

संतपयपरूवणया १ दव्वपमाणं च २ खित्त ३ फुसणा य ४ ।
कालो य ५ अंतर ६ भागो ७ भावे ८ अप्पाबहुं ९ चेव ॥ ८९५ ॥

सदिति सद्भूतं, विद्यमानार्थमित्यर्थः, सच्च तत्पदं च सत्पदं तस्य प्ररूपणा सत्पदप्ररूपणा, कार्येति वाक्यशेषः, यतश्च नमस्कारो जीवद्रव्यादभिन्न इति द्रव्यप्रमाणं वक्तव्यं, कियन्ति नमस्कारवंति जीवद्रव्याणि ?, तथा क्षेत्रमिति कियति क्षेत्रे नमस्कारः, एवं स्पर्शना च कालश्च अन्तरं च वक्तव्यं, तथा भाग इति नमस्कारवन्तः शेषजीवानां कतिभागे वर्त्तन्ते इति भागो वक्तव्यः, तथा 'भावे'त्ति कस्मिन् भावे नमस्कारो वर्त्तते इति वाच्यम्, 'अप्पाबहुं चेव'त्ति अल्पबहुत्वं च वक्तव्यं, प्राक्प्रतिपन्नप्रतिपद्यमानकापेक्षयेति गाथासमासार्थः ॥ व्यासार्थं तु प्रतिद्वारं वक्ष्यति, तत्राद्यं द्वारमभिधित्सुराह—

संतपयं पडिवन्ने पडिवज्जंते य मग्गणं गइसु १ । इंदिय २ काये ३ जोए ४ वेए ५ य कसाय ६ लेसासु ७ ॥ ८९६ ॥

भासग १४ परित्त १५ पज्जत्त १६ सुहुम १७ सन्नी य १८ भव १९ चरिमे २० ॥ ८९७ ॥

सम्मत्त ८ नाण ९ दंसण १० संजय ११ उवओगओ १२ य आहारे १३ ।

सत्पदस्य–विद्यमानार्थस्य नमस्कारलक्षणस्य, सूत्रे च द्वितीया षष्ठ्यर्थे वेदितव्या प्राकृतत्वात्, पूर्वप्रतिपन्नान् प्रतिपद्यमानकांश्चाश्रित्य मार्गणा–अन्वेषणा कर्त्तव्या, क्वेत्याह–गतिषु चतसृष्वपि, तद्यथा–नमस्कारः किमस्ति किं वा नास्तीति, तत्रास्तीति ब्रूमः, तथाहि–चतुष्प्रकारायामपि गतौ नमस्कारस्य पूर्वप्रतिपन्ना नियमतः, प्रतिपद्यमानकास्तु विवक्षितकाले भाज्याः, कदाचिद् भवन्ति कदाचिन्नेति, एवमिन्द्रियादिषु चरमान्तेषु द्वारेषु यथा पीठिकायां मतिज्ञानस्य सत्पदप्ररूपणा कृता तथा नमस्कारस्यापि कर्त्तव्या, तयोरभिन्नस्वामिकत्वेनैकवक्तव्यत्वात् ॥ तदेवं गतं सत्पदप्ररूपणाद्वारम्, अधुना द्रव्यप्रमाणक्षेत्रस्पर्शनारूपं द्वारत्रयमभिधित्सुराह—

पलियासंखिज्जइमो पडिवन्नो होज्ज खित्त लोअस्स । सत्तसु चउदसभागेसु हुज्ज फुसणावि एमेव ॥ ८९८ ॥

इह नमस्कारस्य प्रतिपद्यमानकाः कदाचिद्भवन्ति कदाचिन्न, यदापि भवंति तदापि जघन्यत एको द्वौ वा, उत्कर्षतः सूक्ष्मक्षेत्रपल्योपमस्य असङ्ख्येयभागे यावन्त आकाशप्रदेशास्तावत्प्रमाणाः, 'पलियमसंखेज्जइमो पडिवन्नो'त्ति पल्योपमस्य–सूक्ष्मक्षेत्रपल्योपमस्य असङ्ख्येयो भागः, पूर्वप्रतिपन्नाः जघन्यतः सूक्ष्मक्षेत्रपल्योपमासङ्ख्येयभागप्रदेशप्रमाणाः, उत्कर्षतोऽप्येतावत्प्रमाणा एव, नवरं जघन्यपदादुत्कृष्टपदमधिकमवसातव्यमिति। द्वारम् ॥ क्षेत्रद्वारमाह–'खेत्त लोगस्से'त्यादि, क्षेत्रमधिकृत्य चिन्तायां लोकस्य सप्तसु चतुर्दशभागेषु भवेन्नमस्कारः, इयमूर्ध्वलोकमधिकृत्य चिन्ता, अधोलोक-

चिन्तायां तु पञ्चसु चतुर्दशभागेषु द्रष्टव्यम्, तथाहि–नमस्कारवान् जीव ऊर्ध्वमनुत्तरसुरेषु गच्छन् लोकस्य सप्तसु चतुर्दशभागेषु भवति, अधस्तु षष्ठपृथिव्यां गच्छन् लोकस्य पंचसु चतुर्दशभागेष्विति । 'फुसणावि एमेव'त्ति, एवमेव स्पर्शनाऽपि वक्तव्या, नवरं स्पर्शनाचिन्तायां पर्यन्तवर्त्तिनोऽपि प्रदेशान् स्पृशतीति क्षेत्रात् स्पर्शनाया भेदेनाभिधानं ॥ सम्प्रति कालद्वारप्रतिपादनार्थमह—

एगं पडुच्च हिट्ठा तहेव नाणाजियाण सव्वद्धा ।
अंतर पडुच्चमेगं जहन्नमंतोमुहुत्तं तु ॥ ८९९ ॥

एकं नमस्कारवन्तं जीवं प्रतीत्य यथैवाधस्तात् 'उवओग पडुच्चंतोमुहुत्त लद्धीए होइ उ जहण्णा' इत्यादिना काल उक्तः तथैवेहापि वक्तव्यः, नानाजीवानां पुनर्नमस्कारचिन्तायां सर्वाद्धा-सर्वः कालः, लोकेऽस्याऽऽकालमविच्छेदेन भावात् । गतं कालद्वारम्, अधुनाऽन्तरद्वारं भावद्वारं चाह—

अंतर पडुच्चमेगं जहन्नमंतोमुहुत्तं तु ॥ ८९९ ॥

उक्कोसेणं चेवं अद्धापरियट्टओ य देसूणो । नाणाजीवे नत्थि उ भावे य भवे खओवसमे ॥ ९०० ॥

नमस्कारात् परिभ्रष्टस्य पुनर्नमस्कारलाभे यदपान्तरालं तत् एकं जीवं प्रतीत्य जघन्यतोऽन्तर्मुहूर्त्तम्, उत्कर्षतस्त्वे-तदेव दर्शयति–'अद्धा परियट्टतो उ देसूणो' अर्धः पुद्गलपरावर्त्तो देशोनः, प्राप्तभावनमस्कारस्योत्कर्षतोऽप्येतावन्मात्र-संसारभावात्, नानाजीवान् प्रति पुनर्नास्त्यन्तरं, न खलु स कश्चनापि कालोऽस्ति यत्र सर्वथा न कस्यापि लोके नम-स्कारसंभव इति, द्वारम् । भावे तु विचार्यमाणे नमस्कारो भवेत् क्षायोपशमिके, एतच्च प्राचुर्यमङ्गीकृत्योक्तम्, अन्यथा

क्षायिकौपशमिकयोरप्येके वदन्ति, तत्र क्षायिके यथा श्रेणिकस्य, औपशमिके श्रेण्यन्तर्गतानामिति, इह यद्यपि 'उद्देश-क्रमेण निर्देश' इति भागद्वारव्याख्यानानन्तरं भावद्वारव्याख्यानमुचितं तथापि 'विचित्रा सूत्रगति'रिति न कश्चिद्दोषः ॥ सम्प्रति भागद्वारं व्याचिख्यासुराह—

जीवाणऽणंतभागो पडिवन्नो सेसगा अणंतगुणा ।

जीवानामनन्ततमो भागो नमस्कारस्य प्रतिपन्नः प्राप्यते, शेषास्तु नमस्कारमप्रतिपन्ना मिथ्यादृष्टयोऽनन्तगुणाः, गतं भागद्वारम् । अल्पबहुत्वद्वारम्—यथा पीठिकायां मतिज्ञानस्य तथा भावनीयं ॥ तदेवं कृता नवपदप्ररूपणा, सम्प्रति चशब्दाक्षिप्तां पञ्चविधप्ररूपणामभिधाय पश्चिमार्धेन वस्तुद्वारं निरूपयति—

वत्थुं अरहंताई पंच भवे तेसिमो हेऊ ॥ १०१ ॥

वस्तु दलिकं द्रव्यं योग्यमर्हमित्यनर्थान्तरं, तत्र वस्तु–नमस्कारस्य योग्यमर्हदादयः पञ्च भवन्ति, तेषां च वस्तुत्वे–नमस्कारार्हत्वेऽयं वक्ष्यमाणलक्षणो हेतुः ॥ साम्प्रतं चशब्दसूचितां पञ्चविधां प्ररूपणां प्रतिपिपादयिषुराह—

आरोवणा य भयणा पुच्छण तह दावणा य निज्जवणा ।

आरोपणा भजना पृच्छा 'दायण'त्ति दर्शना दापना वा निर्यापना च, तत्र किं जीव एव नमस्कारः ? आहोश्विन्नमस्कारो वा जीव ? इत्येवं यत्परस्परमवधारणाऽऽरोपणं पर्यनुयोगरूपमेषा आरोपणा, उक्तं च—"किं जीवो होज्ज नमो ? नमो व जीवोत्ति ? जं परोप्परतो । अज्झारोवणमेसो पज्जणुजोगो मयाऽऽरुवणा ॥१॥" अत्र जीव एव नमस्कार इति प्रत्य-

वस्थानं भजना, तथाहि—जीव एव नमस्कार इत्युत्तरपदावधारणं, अजीवात् व्यवच्छिद्य जीव एव नमस्कार इत्यवधारणात्; जीवस्त्वनवधारितो नमस्कारो वा स्यादनमस्कारो वा, यथा द्रुम एव चूत इत्युक्ते द्रुमश्चूतोऽचूतो वा, तत एतत्प्रत्यवस्थानमेकपदव्यभिचाराद्भजना, आह च—"जीवो नमोऽनमो वा नमो उ नियमेण जीव इइ भयणा। जह चूतो होइ दुमो दुमो उ चूतो अचूतो वा ॥ १ ॥" एवं भजनायां कृतायां शिष्यः प्राह—यदि नाम न सर्वो जीवो नमस्कारः तर्हि स किंस्वरूपो जीवो नमस्कारः? किंस्वरूपो वा अनमस्कारः? इति पृच्छा, अत्र प्रतिव्याकरणं दापना, नमस्कारपर्यायपरिणतो जीवो नमस्कारो, नापरिणत इति, निर्यापणा त्वेष एव नमस्कारपर्यायपरिणतो जीवो नमस्कारः, नमस्कारोऽपि जीवपरिणाम एव, नाजीवपरिणाम इति, अथ दापनानिर्यापनयोः कः प्रतिविशेषः?, उच्यते—दापना प्रश्नार्थव्याख्यानं, निर्यापना तस्यैव निगमनम् ॥

अथवेयमन्या चतुर्विधा प्ररूपणा—

नमुक्कारऽनमोक्कारो नोआइजुए व नवहा वा ॥ ९०२ ॥

इह चातुर्विध्यं प्ररूपणायाः प्रकृत्यकारनोकारोभयनिषेधसमाश्रयणात् प्रतिपत्तव्यम्, तत्र प्रकृतिर्नाम शुद्धतास्वभावो यथा नमस्कार इति, स एव नञा सम्बन्धादकारसम्भवेऽनमस्कारः, स एव नोशब्दोपादानात् नोनमस्कारः, उभयनिषेधात्तु नोअनमस्कारः, तत्र नमस्कारः अनमस्कार इति भङ्गकद्वयं साक्षादुपात्तं, 'नोआदिजुते' इति नोशब्देन आदियुक्तो यस्य नमस्कारस्य इतरस्य वा अनमस्कारस्य स नोआदियुक्तः, अनेन शेषौ द्वौ भङ्गावाक्षिप्तौ, नोनमस्कारो नोअनमस्कार इति, तत्र नमस्कारो नाम नमस्कारपरिणतो जीवः, अनमस्कारस्त्वपरिणतो लब्धिशून्यो वा, नोनमस्कारो

विवक्षया नमस्कारदेशोऽनमस्कारो वा, देशसर्वनिषेधपरत्वान्नोशब्दस्य, नोअनमस्कारोऽपि अनमस्कारदेशो वा नमस्कारो
वा, एषा चतुर्विधा प्ररूपणा । अथैतेषु भङ्गेषु मध्ये को नयः कान् भङ्गकानिच्छतीति निरूप्यते, तत्र शब्दादयस्त्रयः
शब्दनयाः सम्पूर्णमेव प्रदेशरहितमखण्डं वस्त्वभ्युपगच्छन्तीति तन्मतेन द्वावेव भङ्गौ—नमस्कारोऽनमस्कार इति, नैगमा-
दयस्तु चत्वारो नया देशप्रदेशानपि वस्तुनोऽभ्युपगच्छन्तीति तन्मतापेक्षया चत्वारोऽपि भङ्गाः, तदेवं प्रागुक्ता पञ्चविधा
प्ररूपणा इयं चतुर्विधेति सङ्कलने प्रकारान्तरेण नवविधा प्ररूपणा प्रतिपादिता द्रष्टव्या, गतं प्ररूपणाद्वारम् । इदानीं
'वत्थुं तऽरहंताई पंच भवे तेसिमो हेऊ' इति गाथाशकलोपन्यस्तं वस्तुद्वारमवसरप्राप्तं विस्तरतो व्याख्यायते, तच्चानन्त-
रोक्तं गाथाशकलं प्रागेव व्याख्यातं, नवरं तत्र यदुक्तं 'तेषां वस्तुत्वे अयं हेतु' रिति स इदानीं हेतुरुच्यते, तत्रेयं गाथा—

मग्गो अविप्पणासो आयारे विणयया सहायत्तं । पंचविहनमुक्कारं करेमि एएहिं हेऊहिं ॥ ९०३ ॥

मार्गः अविप्रणाश आचारः विनयता सहायत्वं यथाक्रममर्हदादीनां नमस्कारार्हत्वे इमे हेतवः, तथा चाह—पञ्चविधनमस्कारं
करोम्येतैर्हेतुभिरिति ॥ इयमत्र भावना—अर्हतां नमस्कारार्हत्वे मार्गः—सम्यग्दर्शनादिलक्षणो हेतुः, तथाहि—असौ मार्गो
भगवद्भिरेव प्रदर्शितः तस्माच्च मुक्तिपदावाप्तिः ततः परम्परया मुक्तिहेतुत्वान्नमस्कारार्हास्ते इति, सिद्धानां नमस्कारार्हत्वेऽवि-
प्रणाशः—शाश्वतत्वं हेतुः, यतस्तदविप्रणाशमवगम्य प्राणिनः संसारवैमुख्येन मोक्षाय घटन्ते, तथा आचार्याणां नमस्का-
रार्हत्वे आचारो हेतुः, तथाहि—तानाचारयत आचारख्यापकांश्च प्राप्य प्राणिन आचारपरिज्ञानानुष्ठाननिमित्तं यतन्ते, उपा-
ध्यायानां तु नमस्कारार्हत्वे विनयो हेतुः, यतस्तान् स्वयं विनीतान् प्राप्य कर्म्मविनयसामर्थ्यविनयवन्तो भवन्ति देहिनः,

साधूनां नमस्कारार्हत्वे हेतुः सहायत्वं, यतस्ते सिद्धिवधूसङ्गमैकनिष्ठानां साधूनां तदवाप्तिक्रियासाहायकमनुतिष्ठन्ति, एवं तावत् समासेन अर्हदादीनां नमस्कारार्हत्वद्वारेण मार्गप्रणयनादयो गुणा उक्ताः ॥ सम्प्रति प्रपञ्चेनार्हतां गुणानुपदर्शयन्नाह—

अडवीअ देसिअत्तं तहेव निज्जामया समुद्दम्मि । छक्कायरक्खणट्ठा महगोवा तेण वुच्चंति ॥ ९०४ ॥

अटव्यां देशकत्वं कृतमर्हद्भिः, तथैव निर्यामकाः समुद्रे, तथा भगवन्तः एव षट्कायरक्षणार्थं यतः प्रयत्नं कृतवंतस्त-तस्ते महागोपा उच्यन्ते, इति गाथासमासार्थः ॥ अवयवार्थं तु प्रतिद्वारं वक्ष्यति, तत्र आद्यद्वारावयवार्थप्रतिपादनार्थमाह—

पावंति जहिट्ठपुरं भवाडविंपी तहा जीवा ॥ ९०५ ॥

अडविं सपच्चवायं वोलिन्ता देसिओवएसेणं । पावंति जहिट्ठपुरं भवाडविंपी तहा जीवा ॥ ९०५ ॥

पावंति निव्वुइपुरं जिणोवइट्ठेण चेव मग्गेण । अडवीइ देसिअत्तं एवं नेयं जिणिंदाणं ॥ ९०६ ॥

अटवीं प्रतीतां सप्रत्यपायां—व्याघ्रादिप्रत्यपायबहुलां वोलित्वा—उल्लङ्घ्य देशकोपदेशेन—निपुणमार्गज्ञोपदेशेन प्राप्नुवन्ति यथा इष्टपुरं—इष्टं पत्तनं, तथा जीवा अपि भवाटवीं, अपिशब्दो भिन्नक्रमः, स च यथास्थानं योजितः, उल्लङ्घ्येति वर्त्तते, किं? ,प्राप्नुवन्ति निर्वृतिपुरं—सिद्धिपुरं जिनोपदिष्टेनैव, नान्योपदिष्टेन, अन्येषामसर्वज्ञतया सम्यग्मार्गपरिज्ञानासम्भवात्, मार्गेण, एवमटव्यां देशकत्वं ज्ञेयं जिनेन्द्राणामिति गाथाद्वयसमासार्थः ॥ व्यासार्थस्तु कथानकादवसेयः, तच्चेदम्—एत्थ अडवी दुविहा—दव्वाडवी भावाडवी य, तत्थ दव्वाडवीए ताव उदाहरणं—वसंतपुरं नगरं, धणो सत्थवाहो, सो पुरं गंतुकामो घोसणं करेइ, जहा नंदिफलनायए, तत्थ बहवे तडियकप्पडिगादयो संपविट्ठा, सो तेसिं मिलियाणं पंथगुणे कहेइ, एगो पंथो उज्जुगो १ एगो वंको २, जो सो वंको तेण मणागं सुहेण गम्मइ, बहुणा य कालेण इच्छियं पुरं पाविज्जइ, अवसाणे

य सो उज्जुगं चेव ओयरइ, जो पुण उज्जुगो तेण लहुं चेव गम्मइ, परं किच्छेण, जतो सो अतीव विसमो सण्हो य, तत्थ ओयारे चेव दुवे महाघोरा वग्घसिंघा परिवसंति, ते ततो पाए चेव लग्गंति, अमुयंताण य पंथं न पवहंति, अवसाणं च जाव अणुवट्टंति, रुक्खा य तत्थ एगे मणोहरा, तेसिं पुण छायासु न वीसमियबं, मारणप्पिया खु सा छाया, अवरे पुण परिसडियपंडुपत्ता, तेसिं पुण अहो मुहुत्तगं वीसमियबं, मणोहररूवधारिणो महुरवयणा य एत्थ मग्गतडट्ठिया चेव बहवे पुरिसा हक्कारेंति, तेसिं वयणं न सोयबं, सत्थिगा खणंपि न मोत्तबा, एगागिणो नियमा भयं दुरंतं, थोवो दवग्गी अप्पमत्तेहिं उल्हवेयबो, अणोल्हविज्जंतो य नियमेण डहइ, पुणो य दुग्गुच्चओ पवतो उवउत्तेहिं चेव लंघेयबो, अलंघणे नियमा मरिज्जइ, पुणो महती अइगुविला वंसकुडंगी सिग्घं लंघेयबा, तंमिट्ठियाणं बहू दोसा, ततो लहुगो खड्डो लग्गो, तस्स समीवे मणोरहो नाम वंभणो, निच्चं सन्निहितो अच्छइ, सो भणइ–मणागं पूरेहि एयंति; तस्स वयणं न सोयबं, न सो पूरियबो, सो खु पूरिज्जमाणो महल्लतरगो हवति, पंथातो य भजिज्जिइ, तहा एत्थ किंपागदुमाणं फलाणि पंचपगाराणि दिवाणि नेत्ताइसुहकराणि ण पेक्खियवाणि न भोत्तवाणि, बावीसं च णं एत्थ घोरा महाकराला पिसाया खणं खणमभिद्दवंति, तेऽवि णं न गणेयबा, भत्तं पाणं च एत्थ विभागतो विरसं दुल्लहं वत्ति, अपयाणगं च न कायबं, अणवरयं च गंतबं, रत्तीएवि जामदुवे सुवियबं, सेसदुगे य गंतबमेव, एवं च गच्छंतेहिं देवाणुप्पिया ! खिप्पामेव अडवी लंघिज्जइ, लंघित्ता य तमेगंतदोगच्चवज्जियं पसत्थं सिवपुरं पाविज्जइ, तत्थ य पुणो न होंति केइ किलेसा इति, ततो तत्थ केई तेण समं पयट्टा, जे उज्जुगेण पहाविया, अण्णे पुण इयरेण, ततो सो पसत्थे दिवसे उच्चलितो, पुरतो वच्चंतो मग्गसिलाइसु

श्रीआवश्यकमलयगिरीयवृत्तौ नमस्कारे

॥ ४९५ ॥

अटवीदेशकोदाहरणं

(विसमं) आहणइ, पंथस्स दोसगुणपिसुणेगाणि अक्खराणि लिहति, एत्तियं गयं एत्तियं सेसंति विभासा, एवं जे तस्स निद्देसे वट्टिया ते तेण समं अचिरेण तं पुरं पत्ता, जेऽवि लिहियाणुसारेण सम्मं गच्छंति तेऽवि पावंति, जे न वट्टिया न वा वट्टंति ते न पत्ता न यावि पावेंति, एयं दव्वाडवीदेसगनायं, इदाणिं भावाडवीदेसगं जोइज्जइ, सत्थवाहत्थाणीया अरहंता, उग्घोसणाथाणीया धम्मकहा, तडिगाइथाणीया जीवा, अडवीथाणितो संसारो, उज्जुगो साहुमग्गो, वंको य सावगमग्गो, पप्पपुरत्थाणीतो मोक्खो, वग्घसीहत्थाणीया रागदोसा, मणोहररुक्खच्छायाथाणियातो इत्थियाइसंसत्तवसहीतो परिसडियाइथाणियातो अणवज्जवसहीतो, मंगतडत्थहक्कारणपुरिसत्थाणिगा पासत्थादी अकल्लाणमित्ता, छायादिपडिसेविणो य ते न पत्ता न यावि पावेंति, एयं दव्वाडवीदेसगनायं, इदाणिं भावाडवीदेसगं जोइज्जइ, सत्थवाहत्थाणीया ... बावीसं परिसहा, फलथाणीया विसया, पिसायथाणीया बावीसं परिसहा, सत्थिगाथाणिया साहू, दवमादिथाणीया कोहादओ कसाया, जामदुगे सज्झातो, पुरपावणं च मोक्खसुहंति, एत्थ य तं पुरं भत्तपाणाणि एसणिज्जाणि, अपयाणगथाणितो निरुज्जमो, जामदुगे सज्झातो, पुरपावणं च मोक्खसुहंति, एत्थ य तं पुरं गंतुकामो जणो उवदेसणादिणा उवगारी सत्थवाहोत्ति नमंसति, एवं मोक्खत्थीहिवि भयवं पणमेयव्वो, तथा चाह—

जह तम्मिह सत्थवाहं नमइ जणो तं पुरं तु गंतुमणो । परमुवगारित्तणतो निविग्घत्थं च भत्तीए ॥ ९०७ ॥

मोक्खत्थीणंपि जिणो तहेव जम्हा अतो अरिहा ॥ ९०८ ॥

अरिहो उ नमोक्कारस्स भावओ खीणरागमयमोहो ।

संसाराअडवीए मिच्छत्तन्नाणमोहिअपहाए । जेहिं कयं देसियत्तं, ते अरिहंते पणिवयामि ॥ ९०९ ॥

यथा च तत् विवक्षितं पुरं गन्तुमना जनः परमोपकारित्वात् निर्विघ्नार्थं च भक्त्या तं सार्थवाहमिह लोके नमति, तथैव जिनो भावतः क्षीणरागमदमोहः–प्रध्वस्तरागद्वेषमोहो नमस्कारस्यार्हो–योग्यो यस्मादतोऽर्हन् ।

॥ ४९५ ॥

संसाराटव्यां, किंविशिष्टायामित्याह–मिथ्यात्वाज्ञानमोहितपथायां–मिथ्यात्वाज्ञानाभ्यां मोहितः पन्था यस्यां सा तथा तस्यां, यैः कृतं देशकत्वं तानर्हतः प्रणिपतामि–नमस्करोमि ॥ तच्च देशकत्वं दृष्ट्वा ज्ञात्वा च सम्यक्पन्थानमासेव्य च कृतं, तथा चाह—

सम्मद्दंसणदिट्ठो नाणेण य तेहि सुट्ठु उवलद्धो । चरणकरणेहिं पहतो नेव्वाणपहो जिणिंदेहिं ॥ ९१० ॥

सम्यग्दर्शनेन–अविपरीतेन दर्शनेन दृष्टो, ज्ञानेन च सुट्ठु–यथावस्थितस्तैरर्हद्भिर्ज्ञातः, चरणं च करणं च चरणकरणं, समाहारत्वादेकवचनं, तेन प्रहतः–आसेवितो निर्वाणमार्गो जिनेन्द्रैः, तत्र चरणं–व्रतादि करणं–पिण्डविशुद्ध्यादिः, यथोक्तम्–"वय ५ समणधम्म १० संजम १७ वेयावच्चं १० च बंभगुत्तीतो ९ । नाणातितियं ३ तव १२ कोहनिग्गहाई ४ चरणमेयं ॥ १ ॥ पिंडविसोही ४ समिती ५ भावण १२ पडिमा १२ य इंदियनिरोहो ५ । पडिलेहण २५ गुत्तीओ ३ अभिग्गहा ४ चेव करणं तु ॥ २ ॥" न केवलं प्रहत एव, किन्तु ते खल्वनेन पथा निर्वृतिपुरमेव प्राप्ताः ॥ तथा चाह—

सिद्धिवसहिमुवगया नेव्वाणसुहं च ते अणुप्पत्ता । सासयमव्वाबाहं पत्ता अयरामरं ठाणं ॥ ९११ ॥

सिद्धिवसतिं–मोक्षालयम् उपगताः–सामीप्येन कर्म्मविगमलक्षणेन प्राप्ताः, अनेन एकेन्द्रियव्यवच्छेदमाह, केषाञ्चित् सुखदुःखरहिता एव तत्र तिष्ठन्तीति दर्शनं तत्राह–निर्वाणसुखं च ते अनुप्राप्ताः, निरतिशयसुखं प्राप्ता इत्यर्थः, ते च दर्शनपरिभवादिनेहागच्छन्तीति केषाञ्चिद्दर्शनं तन्निषेधार्थमाह–शाश्वतं–नित्यं अव्याबाधं–व्याबाधारहितं अजरामरं–जरामरणरहितं स्थानं प्राप्ताः ॥ सम्प्रति द्वितीयं द्वारं व्याचिख्यासुराह—

पावंति जहा पारं सम्मं निज्जामगा समुद्दस्स । भवजलहिस्स जिणिंदा तहेव जम्हा अओ अरिहा ॥ ९१२ ॥

प्रापयन्ति-नयन्ति यथा-येन प्रकारेण पारं-पर्यन्तं सम्यक्-शोभनेन विधिना निर्यामकाः प्रतीताः समुद्रस्य, तथैव भवजलधेः-भवसमुद्रस्य पारं जिनेन्द्राः प्रापयन्तीति, यस्मादेवमतस्तस्मादर्हो नमस्कारस्य, एष सङ्क्षेपार्थः ॥ भावार्थः पुनरेवम्-एत्थ निज्जामगा दुविहा, तंजहा-दव्वनिज्जामया भावनिज्जामया य, तत्थ दव्वनिज्जामए उदाहरणं-तहेव घोसणगं विभासा, एत्थ अट्ठ वाया वण्णेयव्वा, तंजहा-पादीणवाए पडीणवाए उदीणवाए दाहिणवाए, जो उत्तरपुरच्छिमेणं वातो सो सत्तासुयो, जो दाहिणपुव्वेणं सो तुंगारो, जो दाहिणावरेणं सो वीयावो, अवरुत्तरेणं गज्जभो, एवमेते अट्ठ वाया, अन्नेऽवि दिसासु अट्ठ, तंजहा-उत्तरसत्तासुओ पुरत्थिमेणं सत्तासुओ य, तहा पुरिमतुंगारो दाहिणतुंगारो दाहिणबीयावो य अवरबीयावो य अवरगज्जभो उत्तरगज्जभो य, इयमत्र भावना-चत्वारः शुद्धदिग्वाताः, तद्यथा-प्राचीनवातः प्रतीचीनवातः उदीचीनवातो दक्षिणवातश्च, तत्र यः प्राच्या दिशः समागच्छति स प्राचीनवातः, एवं शेषदिग्वातभावनाऽपि कार्या, चत्वारः शुद्धविदिग्वाताः, तद्यथा-उत्तरपूर्वस्यां सक्तासुको, दक्षिणपूर्वस्यां तुंगारो, दक्षिणापरस्यां बीजावापः, अपरोत्तरस्यां गर्जाभः, एवमष्टौ शुद्धदिग्विदिग्वाताः, अष्टावन्ये दिग्विदिगपान्तरालवर्त्तिनः, तद्यथा-उत्तरस्या उत्तरपूर्वस्याश्चापान्तराले उत्तरसक्तासुकः १ उत्तरपूर्वस्याः पूर्वस्याश्चापान्तराले पूर्वसक्तासुकः २ पूर्वस्या दक्षिणपूर्वस्याश्चापान्तराले पूर्वतुङ्गारः ३ दक्षिणपूर्वस्या दक्षिणायाश्चान्तरा दक्षिणतुङ्गारः ४ दक्षिणस्याः दक्षिणापरस्याश्च दक्षिणवीजापः ५ दक्षिणापरस्या अपरस्याश्चापरवीजापः ६ अपरस्या अपरोत्तरस्याश्चापरगर्जाभः ७, अपरोत्तरस्या उत्तरस्याश्चापान्तराले उत्तरगर्जाभः ८, एवमेते

निर्यामकता

जे मोरपोसगा तेसिं गामं गतो परिव्वायगेण लिंगेण, तेसिं च मयहरस्स धूयाए चंदपियणो डोहलो, सो समुदाणंतो गतो, ते पुच्छंति, सो भणइ–मम दारगं देह तो णं पाएमि चंदं, तेहिं पडिस्सुयं, पडमंडवो कारावितो, पुण्णिमादिवसे मज्झे छिड्डं कयं, मज्झगए चंदे सव्वरसालूहिं संजोइत्ता दुद्धस्स थालं भरिता सद्दाविया, पेच्छइ–थालमज्झे चंदं, भणिया–पियाहि, पियइ, उवरिं पुरिसो उच्छाएइ, दोहले अवणीए कालेण जा पुत्तो जातो, चंदगुत्तो से नामं कयं, सोवि ताव संवड्ढइ, चाणक्को धाउविलाणि मग्गइ, सो य चंदगुत्तो दारगेहिं समं रमइ, रायनीईए विलासा, चाणक्को य पडिएइ, पेच्छइ, सो राया, ठितो अ, अण्णे मंतिसामंता, अवरे पाइक्का, सो य जो जस्स जोग्गो तं तस्स देसं विलहेइ, एत्थंतरे चाणक्केण मग्गितो–अम्हवि किंचि दिज्जह, तेण भणियं–तुमं गावीतो लएहि, सो भणइ–मा मं मारेज्ज कोई, ततो भणइ–वीरभोज्जा वसुंधरा, नायं जहा विन्नाणंपि से अत्थि, पुच्छितो–कस्स तुमंति ?, दारगेहिं भणियं–परिव्वायगपुत्तो एस, अहं सो परिव्वायगो, जामो जा ते रायाणं करेमि, गतो, पागतो लोगो मिलितो, पाडलिपुत्तं रोहियं, नंदेण भग्गो, परिव्वायगो नट्ठो, आसेहिं पिट्ठतो लग्गो, ततो चाणक्को चंदगुत्तं पउमिणीसंडे छुहित्ता रयगो जातो, पच्छा एगेण जच्चवल्हीकिसोरगेण आसवारेण पुच्छितो–कत्थ चंदगुत्तो ?, चाणक्को भणइ–पेच्छ पउमसरे पविट्ठो चंदगुत्तो, ततो आसवारेण दिट्ठो, ततो अणेण घोडगो चाणक्कस्स अल्लितो, खग्गं मुक्कं, जाव निगुंडितो जलोयरणट्ठयाए कंचुगं मेल्लेउं ताव अणेण खग्गं घेत्तूण दुहाकतो, पच्छा चंदगुत्तो हक्कारिय चडावितो, पुणो पलाया, पुच्छितो अणेण चंदगुत्तो–जं वेलं सारिओ तुमं तंवेलं तुमे किं चिंतियंति ?, तेण भणियं–एवमेव धुवं भोलणं दिट्ठं, अज्जो चेव जाणइ, ततोऽणेण

जाणियं–जोग्गो, न एस विप्परिणमइत्ति; पच्छा चंदगुत्तो छुहाइतो, चाणक्को तं ठवित्ता भत्तस्स अतिगतो, बीहेइ य–मा एत्थ नज्जेज्जामो, डोंडस्स वाहिं निग्गयस्स पोट्टं अप्फुरियं दिट्ठं, सो पुच्छिओ–कत्थ भोयणं लब्भति ?, तेण भणियं–अमुगत्थ, इयाणिं चेव दहिकूरं जिमिय आगतो, ततोऽणेण तस्स छुरियाए पोट्टं फालियं, दधिकूरं गहाय आगतो, जिमितो दारगो, अन्नया अन्नत्थ गामे रत्तिं समुदाणेइ, थेरीए पुत्तभंडाणं वेवली परिवेसिया, एक्केण मज्झे हत्थो छूढो, दड्ढो रोयति, ताए भण्णइ–तुमं चाणक्कमंगलो, पढमं चेव हत्थं मज्झे छुहसि, पढमं पासाणि घिप्पंति, पच्छा मज्झभागो, चाणक्कस्स उवगयं, गतो हिमवंतकूडं, तत्थ पव्वयगो राया, तेण समं मित्तयं जाया, भणइ–नंदं ओयवित्ता समं समेण रज्जं विभजामो, चलिया, देसं लूडंता एंति, एगत्थ नगरं न पडइ, पविट्ठो तिदंडी चाणक्को, वत्थूणि जोएइ, इंदकुमारियातो दिट्ठातो, तासिंतणएण पभावेण न पडइ, नियडीए नीयावियातो, पडियं नगरं, गया, पाडलिपुत्तं रोहियं, नंदो धम्मवारं मग्गइ, चाणक्केण भणियं–एगेण रहेण जं तरसि तं नीणेहि, दो भज्जातो एगं कण्णगं दव्वं च नीणेइ, कन्ना चंदगुत्तं पलोएइ, भणिया–जाहित्ति, तीए चंदगुत्तरहं विलग्गंतीए नव अरगा रहस्स भग्गा, चंदगुत्तेण वारिया, चाणक्को भणइ–मा वारेह, नव पुरिसजुगाणि तव वंसो होइ, अतिगदो, दो भागीकयं रज्जं ॥ एगा कण्णगा, कयगविसभाविया, तत्थ पव्वयगस्स इच्छा जाया, सा तस्स दिन्ना, अग्गिपरियंचणे विसपरिगतो मरिउमारद्धो, भणइ–वयंस ! मरिज्जइ, चंदगुत्तो विसं रुंभामित्ति ववसितो, चाणक्केण भिउडी कया, नियत्तो, स मतो, दोवि रज्जाणि तस्स जायाणि ॥ नंदमणूसा चोरियाए जीवंति, ततो चाणक्को चोरग्गाहं मग्गइ, अण्णया बाहिरियाए गतो, तत्थ एगस्स नलदामस्स पुत्तो मक्कोडएण खइतो, तेण आरडियं, पहाविओ नलदामो,

होहित्ति सव्वं कहेयव्वं, एवमाई वइरसामिस्स पारिणामिगी बुद्धी । चलणाहयत्ति, राया तरुणेहिं वुग्गाहिज्जइ, जहा थेरा कुमारामच्चा अवणिज्जंतु, सो तेसिं परिक्खणानिमित्तं भणइ–जो रायं सीसे पाएण आहणइ तस्स को दंडो ?, तरुणा भणंति–तिलंतिलं छिंदियव्वो, तो थेरा पुच्छिया, चिंतेमोत्ति ऊसरिया, चिंतेंति–नूणं देवीए अण्णो को आहणइत्ति ?, आगया भणंति–सक्कारेयव्वो, रण्णो तेसिं च पारिणामिया बुद्धी । आमंडत्ति, आमलगं कित्तिमं एगेण नायं, अइकढिणं अकाले विंवो होहित्ति, तस्स पारिणामिगी बुद्धी । मणीति, एगो सप्पो पक्खीणं अंडगाइं खाइ रुक्खे विलग्गितो, अन्नया सो तत्थ गिद्धेण आलयं विलग्गंतो मारितो, मणी तत्थ पडितो, हेट्ठा कूवो, तं पाणीयं रत्तीभूयं, नीणियं तं सहावितं होइ, दारएण थेरस्स कहियं, तेण परिभावियं, नातो मणी, ततो रुक्खे विलग्गिऊण गहितो, थेरस्स पारिणामिया । सप्पेत्ति, चंडकोसितो चिंतेइ–एरिसो महप्पा इच्चादि विभासा, एयस्स पारिणामिगी । खग्गेत्ति, सावियापुत्तो जोवणधणुम्मत्तो धम्मं न गिण्हइ, मरिऊण खग्गो उववण्णो, पट्ठिसु दोहिवि पासेहिं जहा पक्खरा तहा चम्माणि लंबंति, अडवीए चउप्पहे जणं मारेइ, साहुणो अन्नया तेण पहेण अतिक्कमंति, योगेण आगतो, तेण न तरइ अलियउं, चिंतेइ–एरिसा मए दिट्ठपुव्वा, जाई संभरिया, पच्चक्खाणं देवलोगगमणं, एयस्स पारिणामिगी । थूभे, वेसालीनगरीए नाभीए मुणिसुव्वयथूभो, तस्स गुणेण कोणियस्स (पयासेऽवि) नगरी न पडति, देवया आगासे कूणियं भणति–समणे जइ कूलवालए, मागहियं गणियं लभिस्सइ । राया य असोगचंदए, वेसालिं नगरीं गहेहिति ॥ १ ॥ ततो कोणिओ तं मग्गइ, तस्स का उप्पत्ती–एगस्स आयरियस्स चिल्लओ अविणीतो, तं आयरिओ अंबाडेति, स वेरं वहइ, अण्णया आयरिया सिद्धसिलं तेण समं वंदगा

विलग्गा, ओयरंताणं वहाए सिला मुक्का, दिट्ठा, आयरिएण पाया ओसारिया, इयरहा मारितो होंतो, ततो तस्स सावो दिन्नो—दुरप्पा! इत्थीओ विणस्सिहिसित्ति, मिच्छावादी एसो भवतुत्तिकाउं तावसासमे अच्छइ, नदीए कूले आयावेइ, पंथब्भासे जो सत्थो एइ ततो आहारो होइ, नदीए कूले आयावेमाणस्स तस्स पभावेण सा नदी अण्णओ पवूढा, तेण कूलवारतो नामं कयं, तत्थ अच्छंतो कोणिएण आगमितो, गणियातो सद्दावियातो, एगा मागहिअगणिया भणइ—अहं आणामि, कवडसाविया जाया, सत्थेण समं गया, वंदइ, भणइ य—उद्दाणे भोइए चेइयाइं वंदामि, तुब्भे य सुया, ततो आगया, पारणगे मोयगा संजोइया दिण्णा, अतिसारो जातो, पयोगेण ठवितो, उवट्टणाईहिं संभिन्नं चित्तं, आणीतो, रन्नो वयणं करेहि, कहं?, जहा वेसाली घेप्पइ, थूभो नीणावितो, गणियाकूलवालाणं दोण्हवि पारिणामिगी बुद्धी। इंदत्ति, इंदपाउगातो चाणक्केण चालियातो, एयं पुव्वं भणियं, एसावि पारिणामिया बुद्धी। पारिणामिक्या बुद्धेरेवमादीन्युदाहरणानि, उक्तोऽभिप्रायसिद्धः। सम्प्रति तपःसिद्धप्रतिपादनार्थमाह—

न किलस्सइ जो तवसा सो तवसिद्धो दढप्पहारिव। सो कम्मक्खयसिद्धो, जो सव्वक्खीणकम्मंसो ॥९५२॥

न क्लाम्यति—न क्लमं गच्छति यः सत्त्वस्तपसा बाह्याभ्यन्तरेण स एवंभूतस्तपःसिद्धः, अग्लानित्वात्, दृढप्रहारिवदिति गाथाक्षरार्थः। भावार्थः कथानकादवसेयस्तच्चेदम्—एगो धिज्जाइतो उद्दंतो, अविणयं करेइ, सो ततो ताओ थाणातो नीणितो, हिंडंतो चोरपल्लीमल्लीणो, सेणावइणा पुत्तोत्ति गहितो, तंमि मयंमि सेणावती सो चेव जातो, निक्किवं चाहणइत्ति दढप्पहारी से नामं कयं, सो अन्नया सेणाए समं एगं गामं हंतुं गतो, तत्थ य एगो दरिद्दो, तेण पुत्तभंडाण मग्गंताण दुद्धं जाइत्ता

पायसं रंधावितो, सो य ण्हाइउं गतो, चोरा य तत्थ पडिया, एगेण सो तस्स पायसो दिट्ठो, छुहियत्ति तं गहाय पहावितो, ताणि खुद्दरूवाणि रोवंताणि पिऊमूलं गयाणि, हितो पायसो, सो रोसेणं मारेमित्ति पधावितो, महिला अवपासिता अच्छइ, तहावि जहिं सो चोरसेणावती तत्थ आगच्छइ, सो य गाममज्झे अच्छइ, तेण समं महासंगामो कतो, सेणावइणा चिंतियं—एएण मम चोरा परिभविज्जंति, ततो असिं गहाय निद्दयं छिन्नो, महिला से भणइ—हा निक्किव ! किमियं कयं ?, पच्छा सावि मारिया, गब्भो दोविभागीकतो फुरफुरेइ, तस्स किवा जाया—अधम्मो कतोत्ति, चेडरूवेहिंतो दरिद्दपउत्ती उवलद्धा, ततो दढयरं निव्वेअं गतो, को उवाओ ?, साहू दिट्ठाओ अणेण, भयवं ! को इत्थ उवाओ ?, तेहिं धम्मो कहिओ, सो अ से अवगतो, पच्छा चारित्तं पडिवज्जिय कम्माणमुच्छायणट्ठाए घोरं खंतिअभिग्गहं गेण्हिय तत्थेव विहरइ, ततो हीलिज्जइ हम्मइ य, सो य घोराकारं च कायकिलेसं करेइ, असणाइयं अलहंतो सम्मं अहियासेइ जाव अणेण कम्मं निग्घाइयं, केवलनाणं से उप्पण्णं, पच्छा सिद्धो, उक्तस्तपःसिद्धः । साम्प्रतं कर्म्मक्षयसिद्धप्रतिपादनाय गाथाचरमदलमाह—स कर्म्मक्षयसिद्धो यः 'सर्वक्षीणकर्म्मांशः' सर्वे—निरवशेषाः क्षीणाः कर्म्मांशाः—कर्म्मभेदा यस्य स तथा ॥ अधुना कर्म्मक्षयसिद्धमेव प्रपञ्चतो निरुक्तविधिना प्रतिपादयति—

दीहकालरयं जं तु, कम्मं से सिअमट्ठहा । सिअं धंतंति सिद्धस्स, सिद्धत्तमुवजायइ ॥ ९५३ ॥

दीर्घः, सन्तानापेक्षया अनादित्वात्, कालः—स्थितिवन्धकालो यस्य तत् दीर्घकालं, निसर्गनिर्मलजीवरञ्जनात् रजः कर्म्मैव भण्यते, दीर्घकालं च तत् रजश्च दीर्घकालरजं, यच्छब्दः सर्वमान्यत्वात् उद्देशवचनः, यत् कर्म्म इत्थंप्रकारं,

तुशब्दो भव्यकर्म्मविशेषणार्थः, न खल्वभव्यकर्म्म सर्वथा ध्मायते, ततोऽयमर्थः—दीर्घकालरजो यत् भव्यकर्म तत् शेषितं—शेषीकृतं, स्थित्यादिभिः प्रभूतं सत् स्थित्यनुभावसङ्ख्यापेक्षया अनाभोगसद्दर्शनज्ञानचरणाद्युपायतः शेषम्, अल्पं कृतमिति भावः, प्राक् किंभूतं सत् शेषितमित्यत आह—'अष्टधा' ज्ञानावरणादिभेदेनाष्टप्रकारं सत् 'सितं' 'सित वर्णवन्धनयो'रिति वचनात् 'षिञ् बन्धने' इति वचनात् वा बद्धं कर्म्म ध्मातं 'ध्मा शब्दाग्निसंयोगयो'रिति वचनात् ध्यानानलेन महाग्निना लोहमलवत् येन स सिद्धः, 'पृषोदरादय' इति इष्टरूपनिष्पत्तिः, एवं कर्म्मदहनानन्तरं सिद्धस्य सतः, किं?—सिद्धत्वमुपजायते, नासिद्धस्य, निश्चयनयमेतत्, उक्तं च—"पलालं न दहत्यग्निर्भिद्यते न घटः क्वचित् । नासाधुः (नासन् कश्चित्) प्रव्रजितो, भव्योऽसिद्धो न सिद्ध्यति ॥१॥" उपजायते इत्यपि तत्त्वतस्तदात्मनः स्वाभाविकमेव सद् अनादिकर्म्मावृतं तदावरणविगमेनाविर्भवति, तथापि लौकिकवाचोयुक्त्या व्यवहारदेशनया उपजायते इत्युच्यते, अथवा सिद्धस्य सिद्धत्वं भावरूपमुपजायते, नतु प्रदीपनिर्वाणकल्पमभावरूपं, तेन यदाहुरेके—"दीपो यथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चित् विदिशं न काञ्चित्, स्नेहक्षयात् केवलमेति नाशं ॥ १ ॥ जीवस्तथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चित् विदिशं न काञ्चित्, क्लेशक्षयात् केवलमेति शान्ति ॥ २ ॥' मिति तदपास्तं द्रष्टव्यम्, तथाविधसिद्धत्वभावे दीक्षादिप्रयासवैयर्थ्यप्रसङ्गात्, न खलु कश्चनापि सचेतनः स्ववधाय कंठे कुठारं प्रक्षिपतीति परिभावनीयमेतत्, न च निरन्वयविनाशो युक्तिघटामुपैति, सतः सर्वथा विनाशायोगात्, असतः खरविषाणस्येवादलंस्योत्पत्त्ययोगात् ' नासतो विद्यते भावो, नाभावो विद्यते सत' इति वचनात्, विजृम्भितं चात्रार्थे धर्म्मसङ्ग्रहणि-

टीकादाविति ततः परिभावनीयम्, प्रदीपदृष्टान्तोऽप्यसिद्धो, यतः प्रदीपपुद्गला एव भास्वरं रूपं परित्यज्य तामसं रूपान्तरमासादयन्तीत्यलं विस्तरेण ॥ अथवा अन्यथा व्याख्यायते 'दीर्घकालरज' इति, रज इति रजः सूक्ष्मतया, स्नेहबन्धनयोग्यत्वाद्वा इत्यर्थः, यद्भव्यकर्म्मेति च नैवं व्याख्यायते, साक्षात्कर्म्माभिधानेन सर्वनाम्नो निरर्थकत्वात्, प्रकरणादेव भव्यस्याप्यवगम्यमानत्वात्, अभव्यस्य सिद्धत्वायोगात्, ततो जन्तुकर्म्मेति व्याख्येयम्; जन्तुः-जीवस्तस्य कर्म्म, जन्तुग्रहणेनाबद्धकर्म्मव्यवच्छेदमाह, 'से'तस्य जन्तोरसितं-कृष्णमशुभं संसारानुबन्धित्वात्, एवंविधस्यैव क्षयः श्रेयान्; ननु शुभस्वरूपस्येति भावना, अष्टधा सितमित्यादि पूर्ववत्, प्रथमव्याख्यापक्षमधिकृत्याह-तत्कर्म्म शेषं तस्य समस्थिति वा स्यादसमस्थिति वा ?, न तावत् समस्थिति, विषमनिबन्धनत्वात्, नाप्यसमस्थिति चरमसमये युगपत् क्षयासम्भवात्, एतदयुक्तम्, उभयथाऽप्यदोषात्, तथाहि-विषमनिबन्धनत्वेऽपि सति विचित्रः क्षयसम्भव इति कालतः समस्थितिकत्वाविरोधः, चरमपक्षेऽपि समुद्घातगमनेन समस्थितिकरणभावाददोषः, न चैतत् स्वमनीषिकयोच्यते, यत आह निर्युक्तिकृत्—

नाऊण वेयणिज्जं अइबहुगं आउगं च थोवागं । गंतूण समुग्घायं खवेइ कम्मं निरवसेसं ॥ ९५४ ॥

ज्ञात्वा-केवलेनावगम्य वेदनीयं कर्म्म अतिबहु-शेषभवोपग्राहिकर्म्मापेक्षयाऽतिप्रभूतं, आयुष्कं च कर्म्म तदपेक्षयैव स्तोकं, ज्ञात्वेति वर्त्तते, अत्रान्तरे गत्वा वा-प्राप्य 'समुद्घातं' सम्यक्-अपुनर्भावेन उत्-प्राबल्येन घातः-कर्म्मणो वेदनीयादेर्हननं प्रलयो यत्र प्रयत्नविशेषे स समुद्घातस्तं, गत्वा क्षपयन्ति कर्म्म निरवशेषं, निरवशेषमिव निरवशेषं, प्रभूततमक्षपणात्, शेषस्य चान्तर्मुहूर्त्तमात्रकालावधितया किंचिच्छेषत्वेन परमार्थतोऽसत्कल्पत्वात्, आह-ज्ञात्वा वेदनीयमतिबह्वित्यत्र को



॥५३५॥

नियमो येन तदेव वहुस्थितिकमायुषः सकाशात् भवति ?, न च जातुचिदपि आयुरिति, उच्यते, तथारूपजीवपरिणामस्वाभाव्यात्, तथाहि–इत्थंभूत एवात्मनः परिणामो येनास्यायुर्वेदनीयादिसमं भवति न्यूनं वा, न कदाचनाप्यधिकं, यथा तस्यैवायुषः खल्वध्रुवबन्धः, तथाहि–ज्ञानावरणादीनि कर्माण्यायुर्वर्ज्जानि सप्तापि सर्वदैव बध्नाति, आयुस्तु प्रतिनियत एव काले स्वभवत्रिभागादिशेषरूपे, तत्रैव बन्धवैचित्र्यनियमे न स्वभावाद् यतः परः कश्चिदस्ति हेतुः, एवमिहापि स्वभावविशेष एव नियामको द्रष्टव्यः, आह च भाष्यकृत्–"असमट्ठितीण नियमो को थेवं आउयं न सेसंपि ? । परिणामसहावातो अद्धुयबंधो व तस्सेव ॥ १ ॥" येषां पुनर्भगवतां वेदनीयादिकमायुषा सह स्वभावत एव समस्थितिकमुपजातं ते समुद्घातं न प्रतिपद्यन्ते, तथा चाह भगवानार्यश्यामः–"अगंतूण समुग्घायमणंता केवली जिणा । जाइमरणविप्पमुक्का, सिद्धिं वरगतिं गया ॥ १ ॥" ननु प्रभूतस्थितिकस्य वेदनीयादेरायुषा सह समीकरणार्थं समुद्घातारम्भः, एतच्चायुक्तं, कृतनाशादिदोषप्रसङ्गात्, तथाहि–प्रभूतकालोपभोग्यस्य वेदनीयादेरारत एवापगमसम्पादनात् कृतनाशः, वेदनीयादिवच्च कृतस्यापि कर्म्मक्षयस्य पुनर्विनाशसम्भवात् मोक्षेऽप्यनाश्वासप्रसङ्गः, तदसत्, कृतनाशादिदोषाप्रसङ्गात्, तथाहि–इह यथा प्रतिदिवसं सेतिकापरिभोग्येन वर्षशतोपभोग्यस्य कल्पितस्याहारस्य भस्मकव्याधिना तत्सामर्थ्यतः स्तोकदिवसैर्निःशेषतः परिभोगान्न कृतनाशोपगमः, तथा कर्म्मणोऽपि वेदनीयादेस्तथाविधशुभाध्यवसायानुबन्धादुपक्रमेण साकल्यतो भोगान्न कृतनाशरूपदोषप्रसङ्गः, द्विविधो हि कर्म्मणोऽनुभवः–प्रदेशतो विपाकतश्च, तत्र प्रदेशतः सकलमपि कर्म्मानुभूयते, न तदस्ति किञ्चित्कर्म्म यत्प्रदेशतोऽप्यननुभूतं सत् क्षयमुपयाति, ततः कुतः कृतनाशदोषापत्तिः ?, विपाकतस्तु किञ्चिन्न, अन्यथा

निर्म्मोक्षप्रसङ्गात्, तथाहि—यदि विपाकानुभूतित एव सर्वकर्म्म क्षपणीयमिति नियमस्तर्हि असङ्ख्यातेषु भवेषु तथाविधविचित्राध्यवसायविशेषैर्यन्नरकगत्यादिकं कर्मोपार्जितं तस्य नैकस्मिन् मनुष्यादावेव भवेऽनुभवः, स्वस्वभवनिबन्धनत्वाद्विपाकानुभवस्य, क्रमेण च स्वस्वभवानुगमेनानुभवे नारकादिभवेषु चारित्राभावेन प्रभूततरकर्म्मसन्तानोपचयात् तस्यापि स्वस्वभवानुगमेनानुभवोपगमात् कुतो मोक्षः ?, तस्मात्कर्म्म विपाकतो भाज्यम्, प्रदेशतोऽवश्यमनुभवनीयमिति प्रतिपत्तव्यं, एवं च कश्चिन्न दोषः, नन्वेवमपि दीर्घकालभोग्यतया यत् वेदनीयादिकं कर्म्मोपचितं अथ च परिणामविशेषादुपक्रमेणाऽऽरादेव तदनुभवति ततः कथं न कृतनाशादिदोषप्रसङ्गः ?, तदप्यसत्, बन्धकाले तथाविधाध्यवसायवशात आरादुपक्रमयोग्यस्यैव तेन बन्धनात्, अपिच—जिनवचनप्रामाण्यादपि वेदनीयादिकर्म्मणामुपक्रमो मन्तव्यो, यदाह भाष्यकारः—"उदयक्खयक्खयोवसमोवसमा जं च कम्मुणो भणिया । दव्वादि पंचगं पति जुत्तमुवक्कमणमतोऽवि ॥१॥" न चैवं मोक्षोपक्रमहेतुः कश्चिदस्ति येन चानाश्वासप्रसङ्गो भवेत्, मोक्षाद्धि रागादयश्च्यावयितुमीशाः, ते च निर्म्मूलकाषंकषिता इति, ततो यदुक्तं 'वेदनीयादिवच्च कृतस्यापि कर्म्मक्षयस्ये'त्यादि, न तत्समीचीनमिति स्थितं ॥

इह सर्वोऽपि सयोगिकेवली समुद्घातादर्वाक् आयोजिकाकरणमान्तर्मुहूर्त्तिकमुदयावलिकायां कर्म्मपुद्गलप्रक्षेपव्यापाररूपमुदीरणाविशेषात्मकमारभते, अथ आयोजिकाकरणमिति कः शब्दार्थः ?, उच्यते, आङ् मर्यादायां, आ—मर्यादया केवलिदृष्ट्या योजनं—व्यापारणं, शुभानां योगानामिति गम्यते, आयोजिका तस्याः करणमायोजिकाकरणं, केचिदावर्जितकरणमित्याहुः, तत्रायमन्वर्थः—आवर्जितो नाम अभिमुखीकृतः, तथा च लोके वक्तारः—आवर्जितोऽयं मया, सम्मुखीकृत

आवर्जितस्य—मोक्षगमनं प्रत्यभिमुखीकृतस्य करणं—क्रिया शुभयोगव्यापारणमावर्जितकरणम्,
इत्यर्थः, ततश्च तथाभव्यत्वेन आवर्जितस्य—मोक्षगमनं प्रत्यभिमुखीकृतस्य करणं—क्रिया शुभयोगव्यापारणमावर्जितकरणम्, तथाहि—समुद्घातं
अपरे आवश्यककरणमित्यूचुः, तत्राप्ययमन्वर्थः—आवश्यकेन—अवश्यंभावेन करणमावश्यककरणं, आवर्ज्य आवर्जो वा
केचित्कुर्वन्ति, इदं त्वावश्यककरणं सर्वेऽपि केवलिनः कुर्वन्ति, अन्ये आवर्जीकरणमिति वा पठन्ति, आवर्जीकरणमिति
ष्यण् घञ् वा, मोक्षं प्रति अभिमुखीकर्त्तव्य इत्यर्थः, तस्य करणम्, अतत्तद्भावविवक्षायां च्विप्रत्यये
वा ॥ सम्प्रति समुद्घातादिस्वरूपप्रतिपादनार्थमाह—

दंड कवाडे मंथंतरे य संहरणया सरीरत्थे । भासाजोगनिरोहे सेलेसी सिज्झणा चेव ॥ ९५६ ॥

इह समुद्घातं कुर्वन् प्रथमसमये बाहल्यतः स्वशरीरप्रमाणमूर्ध्वमधश्च लोकान्तपर्यन्तमात्मप्रदेशानां दण्डमारचयति,
द्वितीयसमये पूर्वापरं दक्षिणोत्तरं वाऽऽत्मप्रदेशानां प्रसारणात् पार्श्वतो लोकान्तगामि कपाटं करोति, तृतीये समये
तदेव कपाटं दक्षिणोत्तरं पूर्वापरं वा दिग्द्वयप्रसारणात् मथिसदृशं मन्थानं लोकान्तप्रापिणमारचयति, एवं च प्रायो
लोकस्य बहु पूरितं भवति, मन्थान्तराण्यपूरितानि, जीवप्रदेशानामनुश्रेणि गमनात्, चतुर्थसमये तान्यपि मन्थान्तराणि
सह लोकनिष्कुटैः पूरयति, ततश्च सकलो लोकः पूरितो भवति, तदनन्तरं यथोक्तक्रमात् प्रतिलोमं संहरन् पञ्चमे समये
मन्थान्तराणि संहरति, जीवप्रदेशान् सकर्म्मकान् मन्थान्तरगतान् सङ्कोचयतीत्यर्थः, षष्ठे समये मन्थानमुपसंहरति, घन-
तरसङ्कोचात्, सप्तमे समये कपाटं, दण्डात्मनि सङ्कोचात्, अष्टमे समये दण्डमुपसंहृत्य शरीरस्थो भवति, अमुमेवार्थं
चेतसि निधायोक्तं दण्डकपाटान्तरमन्थान्तराणि संहरणेन, प्रतिलोममिति गम्यते, शरीरस्थ इति वचनात्, न चैतत्स्व-

मनीषिकया व्याख्यानं, यत उक्तम्—'दण्डं प्रथमे समये कपाटमथ चोत्तरे तथा समये । मन्थानमथ तृतीये लोकव्यापी चतुर्थे तु ॥ १ ॥ संहरति पञ्चमे त्वन्तराणि मन्थानमथ पुनः षष्ठे । सप्तमके तु कपाटं संहरति ततोऽष्टमे दण्ड ॥ २ ॥'—मिति, तत्र दण्डसमयात् प्राक् या पल्योपमासङ्ख्येयभागमात्रा वेदनीयनामगोत्राणां स्थितिरासीत् तस्या बुद्ध्याऽसङ्ख्येयभागाः क्रियन्ते, ततो दण्डसमये दण्डं कुर्वन् असङ्ख्येयान् भागान् हन्ति, एकोऽसङ्ख्येयभागोऽवतिष्ठते, यश्च प्राक् कर्म्मत्रयस्यापि रसस्तस्याप्यनन्ता भागाः क्रियन्ते, ततः तस्मिन् दण्डसमये असातवेदनीय १ प्रथमवर्जसंस्थानपञ्चक ५-प्रथमवर्जसंहननपञ्चका ११ प्रशस्तवर्णादिचतुष्को १५ पघाता १६ प्रशस्तविहायोगति १७ अपर्याप्तका १८ स्थिरा १९-शुभ २० दुर्भग२१ दुःस्वरा २२ नादेया २३ यशःकीर्ति २४ नीचैर्गोत्र २५ रूपाणां पञ्चविंशतिप्रकृतीनामनन्तान् भागान् हन्ति, एकोऽनन्तभागोऽवशिष्यते, तस्मिन्नेव च समये सातवेदनीय १ देवगति २ मनुष्यगति ३ देवानुपूर्वी ४ मनुष्यानुपूर्वी ५ पञ्चेन्द्रियजाति ६ शरीरपञ्चका ११ ङ्गोपाङ्गत्रयः १४ प्रथमसंस्थान १५ प्रथमसंहनन १६ प्रशस्तवर्णादिचतुष्टया-२० गुरुलघु २१ पराघातो २२ च्छ्वास २३ प्रशस्तविहायोगति २४ त्रस २५ बादर २६ पर्याप्त २७ प्रत्येका २८ ऽऽतपो-२९ द्योत ३० स्थिर ३१ शुभ ३२ सुभग ३३ सुस्वरा ३४ देय ३५ यशःकीर्त्ति ३६ निर्माण ३७ तीर्थकरो ३८ च्चैर्गोत्र ३९-रूपाणामेकोनचत्वारिंशतः प्रकृतीनामनुभागोऽप्रशस्तप्रकृत्यनुभागमध्ये प्रवेशेनोपहन्यते, समुद्घातमाहात्म्यमेतत्, तस्य चोद्धरितस्य स्थितेरसङ्ख्येयभागस्यानुभागलवानन्तभागस्य यथाक्रममसङ्ख्येया अनन्ताश्च भागाः क्रियन्ते, ततो द्वितीये कपाटसमये स्थितेरसङ्ख्येयान् भागान् हन्ति, एकोऽवशिष्यते, अनुभागस्य चानन्तान् भागान् हन्ति, एकं मुञ्चति, अत्रापि

प्रशस्तप्रकृत्यनुभागघातोऽप्रशस्तप्रकृत्यनुभागमध्ये प्रवेशनेन द्रष्टव्यः, पुनरप्येतस्मिन् समयेऽवशिष्टस्य स्थितेरसङ्ख्येयभागस्यानुभागस्य चानन्तभागस्य पुनर्बुद्ध्या यथाक्रममसंख्येया अनन्ताश्च भागाः क्रियन्ते, ततस्तृतीयसमये स्थितेरसङ्ख्येयान् भागान् हन्ति, एकं असंख्यातभागं मुञ्चति, अनुभागस्य चानन्तान् भागान् हन्ति, एकमनन्तभागं मुंचति, अत्रापि प्रशस्तप्रकृत्यनुभागघातोऽप्रशस्तप्रकृत्यनुभागमध्ये प्रवेशनेनावसेयः, ततः पुनरपि तृतीयसमयावशिष्टस्य स्थितेरसङ्ख्येयभागस्य अनुभागस्य चानन्ततमभागस्य बुद्ध्या यथाक्रममसङ्ख्येया अनन्ताश्च भागाः क्रियन्ते, ततश्चतुर्थे समये स्थितेरसङ्ख्येयान् भागान् हन्ति, एकस्तिष्ठति, अनुभागस्याप्यनन्तान् भागान् हन्ति, एकोऽवशिष्यते, प्रशस्तप्रकृत्यनुभागघातः पूर्ववदवसेयः, एवं च स्थितिघातादि कुर्वतश्चतुर्थसमये स्वप्रदेशापूरितसमस्तलोकस्य भगवतो वेदनीयादिकर्मत्रयस्थितिरायुषः सङ्ख्येयगुणा जाता, अनुभागस्त्वद्याप्यनन्तगुणः, चतुर्थसमयावशिष्टस्य च स्थितेरसङ्ख्येयभागस्यानुभागस्य चानन्ततमभागस्य भूयो बुद्ध्या यथाक्रममसङ्ख्येया अनन्ताश्च भागाः क्रियन्ते, ततोऽवकाशान्तरसंहारसमयेऽसङ्ख्येयान् भागान् हन्ति, एकं असङ्ख्येयभागं शेषीकरोति, अनुभागस्य चानन्तान् भागान् हन्ति, एकं मुञ्चति, एवमेतेषु पञ्चसु दण्डादिसमयेषु प्रत्येकं सामयिकं कण्डकमुत्कीर्णं, समये २ स्थितिकण्डकानुभागकण्डकघातनात्, अतः परं षष्ठसमयादारभ्य स्थितिकण्डकमनुभागकण्डकं चान्तर्मुहूर्त्तेन कालेन विनाशयति, षष्ठादिषु च समयेषु कण्डकस्य प्रतिसमयमेकैकं शकलं तावदुत्किरति यावदन्तर्मुहूर्त्तचरमसमये सकलमपि तत्कण्डकमुत्कीर्णं भवति, एवमन्तर्मुहूर्त्तिकानि स्थितिकण्डकान्यनुभागकण्डकानि च घातयन् तावद्वेदितव्यः यावत् सयोग्यवस्थाचरमसमयः, सर्वाण्यपि चामूनि स्थित्यनुभागकण्डकान्यसङ्ख्येयान्यवगन्तव्यानि ॥

सम्प्रति समुद्घातगतस्य योगव्यापारश्चिन्त्यते-योगाश्च मनोवाक्कायाः, तत्रैषां कः कदा व्याप्रियते?, तत्र काययोग एव केवलो व्याप्रियते, न मनोवाग्योगव्यापारौ, प्रयोजनाभावात्, उक्तं च धर्मसारप्रकरणे-"मनोवचसी तु तदा न व्यापारयति, प्रयोजनाभावा"दिति, काययोगोऽपि प्रथमाष्टमसमययोरौदारिककाययोग एव, द्वितीयषष्ठसप्तमसमयेषु पुनरौदारिके तस्माच्च वहिः कार्मणे वीर्यपरिस्पन्दादौदारिककार्म्मणमिश्रः, त्रिचतुर्थपञ्चमसमयेषु वहिरेवौदारिकाद्वहुतरव्यापारसद्भावात् कार्म्मणकाययोग एव, तन्मात्रचेष्टनादिति, तथा चोक्तमन्यत्रापि-"औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः । मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥ १ ॥ कार्म्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये च । समयत्रयेऽपि तस्मिन् भवत्यनाहारको नियमात् ॥ २ ॥" इति कृतं प्रसङ्गेन, भाषायोगनिरोध इति कोऽर्थः?, परित्यक्तसमुद्घातः कारणवशात् योगत्रयमपि व्यापारयति, तदर्थं मध्यवर्त्तिनं योगमाह-भाषेति, कथं योगत्रयमपि व्यापारयतीति चेत्, उच्यते-अनुत्तरसुरपृष्टः सत्यमसत्यमृषा वा मनोयोगं प्रयुंक्ते, आमन्त्रणादौ सत्यमसत्यामृषा वाग्योगं, नेतरौ द्वौ भेदौ द्वयोरपि, वीतरागत्वात् सर्वज्ञत्वाच्च, काययोगमपि औदारिकं फलकप्रत्यर्प्पणादौ व्यापारयति, अन्तर्मुहूर्त्तमात्रे च कालशेषे भगवान् योगनिरोधं करोति, अत्र केचिद् व्याचक्षते-जघन्यत एतावता कालेन, उत्कर्षतस्तु षड्भिर्मासैः, तदेतदयुक्तं, 'गत्वा समुद्घातं क्षपयन्ति कर्म्म निरवशेष'मिति वचनात्, अन्यच्च-प्रज्ञापनायां योगनिरोधानन्तरं पीठफलकादीनां प्रत्यर्पणमेवोक्तं, न त्वादानमपि, यदि पुनः षण्मासानपि यावद् भगवान् तिष्ठेत् तत आदानमपि वर्षाकालादौ सम्भवतीति तदप्युच्येत, न चोक्तं, तस्मादपव्याख्यानमेतदिति । योगनिरोधप्रतिपादनं च द्विधा-सङ्क्षेपतो विस्तरतश्च,

तत्र सङ्क्षेपतो भाष्यकार–टीकाकारादयः कृतवन्तः, विस्तरतस्तु चूर्णिकारादयः, तत्र सङ्क्षेपत इदं–योगनिरोधं कुर्वन् प्रथम-
मेव याऽसौ शरीरसम्बद्धा मनःपर्याप्तिर्यया पूर्वं मनोद्रव्यग्रहणं कृत्वा भावमनः प्रयुक्तवान्, तत्कर्म्मसंयोगविघटनाय
मन्त्रसामर्थ्येन विषमिव स भगवान् अनुत्तरेणाचिंत्येन निरावरणेन करणवीर्येण तद्व्यापारं निरुणद्धि, तच्चैवम्–'पज्ज-
त्तमेत्तसंनिस्स जत्तियाइं जहण्णजोगिस्स। होंति मणोदवाइं तव्वावारो य जम्मत्तो ॥ १ ॥ तदसंखगुणविहीणं समए
समए निरुंभमाणो सो। मणसो सव्वनिरोहं करेज्ज संखेज्जसमएहिं ॥ २ ॥' वाग्योगकाययोगनिरोधमप्येवम्–"पज्जत्तमेत्त-
बेंदियजहन्नवइजोगपज्जया जे उ। तदसंखगुणविहीणे समए समए निरुंभंतो ॥ १ ॥ सव्ववइजोगरोहं संखातीतेहिं कुणइ
समएहिं। तत्तो य सुहुमपणगस्स पढमसमयोववन्नस्स ॥ २ ॥ जो किर जहन्नजोगो तदसंखेज्जगुणहीणमेकेक्कं। समए निरुं-
भमाणो देहतिभागं च मुंचंतो ॥ ३ ॥ रुंभइ स कायजोगं संखातीतेहिं चेव समएहिं। तो कयजोगनिरोहो सेलेसीभा-
वणामेति ॥ ४ ॥" विस्तरस्त्वेवम्–योगनिरोधं कुर्वन् प्रथमतो वादरकाययोगवलादन्तर्मुहूर्त्तमात्रेण वादरवाग्योगं निरुणद्धि,
क्रमेणेति शेषः, 'आलम्वनाय करणं तदिष्यते तत्र वीर्यवतः', अत्र तदिति वादरतनुरूपं, वादरमनोयोगनिरोधानन्तरं च
पुनरप्यन्तर्मुहूर्त्तं स्थित्वा तत उच्छ्वासनिश्वासावन्तर्मुहूर्त्तमात्रेण निरुणद्धि, ततः पुनरप्यन्तर्मुहूर्त्तं स्थित्वा सूक्ष्मकाययो-
गवलाद्वादरकाययोगं निरुणद्धि, वादरयोगे हि सति सूक्ष्मयोगस्य निरोद्धुमशक्यत्वात्, आह च–"वादरतनुमपि निरुणद्धि
ततः सूक्ष्मेण काययोगेन। न निरुध्यते हि सूक्ष्मो योगः सति वादरे योगे ॥ १ ॥" केचिदाहुः–वादरकाययोगवलाद्
वादरकाययोगं निरुणद्धि, युक्तिं चात्र वदन्ति, यथा कारपत्रिकः स्तम्भे स्थितस्तमेव स्तम्भं छिनत्ति, तथा वादरकाय-

योगोपष्टम्भाद्बादरकाययोगं निहन्तीति, तदत्र तत्त्वमतिशयिनो विदन्ति, बादरं च काययोगं निरुन्धानः पूर्वस्पर्द्धकानामधस्तादपूर्वस्पर्द्धकानि करोति, योगस्पर्द्धकस्वरूपं च कर्म्मप्रकृतिटीकातः पञ्चसङ्ग्रहटीकातो वा वेदितव्यम्, तत्र यानि तस्मिन् भवे पर्याप्तिपर्यायपरिणतेन सता जीवेन पूर्वं कायादिव्यापारनिष्पादनार्थं कृतानि तानि पूर्वस्पर्द्धकान्यभिधीयन्ते, तानि च स्थूलानि, यानि पुनरधुना कर्त्तुमारभते तानि सूक्ष्माणि, न चैवंभूतान्यनादौ संसारे कृतानि ततोऽपूर्वाणीत्युच्यन्ते, तत्र पूर्वस्पर्द्धकानामधस्तात् याः प्रथमादिवर्गणाः सन्ति तासां ये वीर्याविभागपरिच्छेदास्तेषामसङ्ख्येयान् भागानाकर्षति, एकमसङ्ख्येयभागं मुञ्चति, जीवप्रदेशानामपि चैकमसङ्ख्येयं भागमाकर्षति, शेषं सर्वं स्थापयति, एष बादरकाययोगनिरोधप्रथमसमयव्यापारः, तथा च कर्म्मप्रकृतिप्राभृतं "पढमसमये अपुव्वफड्डगाणि करेइ–पुव्वफड्डगाणं हेट्ठा आइवग्गणाणमविभागपरिच्छेयणमसंखेज्जइभागे उक्कडइ, जीवपएसाणं चासंखेज्जइभागमोकड्डइ' त्ति," ततो द्वितीये समये प्रथमसमयाकृष्टजीवप्रदेशासङ्ख्येयभागादसङ्ख्येयगुणभागं जीवप्रदेशानामाकर्षति, तावतोऽसङ्ख्येयान् भागानाकर्षतीत्यर्थः, वीर्याविभागपरिच्छेदानामपि प्रथमसमयाकृष्टात् योगात् असङ्ख्येयगुणहीनं भागमाकर्षन्ति, एवं प्रतिसमयं समाकृष्य तावदपूर्वस्पर्द्धकानि करोति यावदन्तर्मुहूर्त्तचरमसमयः, कियन्ति पुनः स्पर्द्धकानि करोतीति चेत्, उच्यते–श्रेणिवर्गमूलस्यासङ्ख्येयभागमात्राणि, पूर्वस्पर्द्धकानामसङ्ख्येयभागमात्राणि इतियावत्, अपूर्वस्पर्द्धककरणान्तर्मुहूर्त्तानन्तरसमय एव च किट्टीरन्तर्मुहूर्त्तं यावत् करोति, उक्तं च–"नाशयति काययोगं स्थूलं सोऽपूर्वफड्डुकीकृत्य। शेषस्य काययोगस्य तथा किट्टीश्च स करोति ॥ १ ॥" अथ किमिदं किट्टिरिति ?, उच्यते, एकोत्तरां

वृद्धिं च्यावयित्वा अनन्तगुणहान्यैकैकवर्गणास्थापनेन योगस्याल्पीकरणं, तत्र पूर्वस्पर्द्धकानामपूर्वस्पर्धकानां च याः प्रथमादिवर्गणास्तासां येऽविभागपरिच्छेदास्तेषामयमसङ्ख्येयान् भागानाकर्षति, एकमसङ्ख्येयभागं स्थापयति, जीवप्रदेशानामपि चैकमसङ्ख्येयभागमाकर्षति, शेषं सर्वं स्थापयति, एष किट्टीकरणप्रथमसमयव्यापारः, ततो द्वितीयसमये प्रथमसमयाकृष्टवीर्याविभागपरिच्छेदभागादसङ्ख्येयगुणवीर्याविभागपरिच्छेदानां भागमाकर्षति, जीवप्रदेशानां पुनः प्रथमसमयाकृष्टजीवप्रदेशासङ्ख्येभागादसङ्ख्येयगुणं भागं, तावतोऽसङ्ख्येयान् भागानाकर्षतीत्यर्थः, एवं तावत् किट्टीः करोति यावदप्यन्तर्मुहूर्त्तचरमसमयः, तत्र प्रथमसमयकृताभ्यः किट्टीभ्यो द्वितीयसमयकृताः किट्टयोऽसङ्ख्येयगुणहीनाः, गुणकारश्च पल्योपमासङ्ख्येयभागः, एवं शेषेष्वपि भावनीयम्, तथा चोक्तं कर्म्मप्रकृतिप्राभृते–' 'एत्थं अंतोमुहुत्तं किट्टीतो करेइ, असंखेज्जगुणहीणाए सेढीए, जीवपएसे य असंखेज्जगुणाए सेढीए पकड्ढइ, किट्टीगुणकारो पलिओवमस्स असंखेज्जइभागो' त्ति, प्रथमसमयकृताश्च किट्टयः श्रेण्यसङ्ख्येयभागप्रमाणाः, एवं द्वितीयादिसमयेष्वपि प्रत्येकमवगन्तव्याः, सर्वा अपि च किट्टयः श्रेण्यसङ्ख्येयभागप्रमाणाः पूर्वस्पर्द्धकानां च सङ्ख्येयभागमात्राः, किट्टीकरणावसानानन्तरसमये एव च पूर्वस्पर्द्धकान्यपूर्वस्पर्द्धकानि च सामस्त्येन नाशयन्ति, तत्समयादारभ्य अन्तर्मुहूर्त्तं यावत् किट्टिगतयोगो भवति, तथा चोक्तम्–"किट्टिकरणे निट्ठिए ततो सेकाले पुव्वफड्डगाणि अपुव्वफड्डगाणि च सेसेइ, अंतोमुहुत्तं किट्टिगयजोगो भवति" त्ति, न चात्र किञ्चिदपि करोति, ततोऽनन्तरसमये सूक्ष्मकाययोगोपष्टम्भादन्तर्मुहूर्त्तमात्रेण सूक्ष्मवाग्योगं निरुणद्धि, ततो निरुद्धसूक्ष्मवाग्योगोऽन्तर्मुहूर्त्तमास्ते, नान्यसूक्ष्मयोगनिरोधं प्रति प्रयत्नवान् भवति, ततोऽन-

न्तरसमये सूक्ष्मकाययोगोपष्टम्भात् सूक्ष्ममनोयोगमन्तर्मुहूर्त्तमात्रेण निरुणद्धि, ततः पुनरप्यन्तर्मुहूर्त्तमास्ते, ततः सूक्ष्म-
काययोगवलात् सूक्ष्मकाययोगमन्तर्मुहूर्त्तेन निरुणद्धि, तं च निरुन्धानः सूक्ष्मक्रियमप्रतिपाति ध्यानमारोहति, तत्सा-
मर्थ्याद्वदनोदरादिविवरपूरणेन सङ्कुचितदेहत्रिभागवर्त्तिप्रदेशो भवति, आह च—"सूक्ष्मेण काययोगेन ततो निरुणद्धि
सूक्ष्मवाङ्मनसौ । भवति ततोऽसौ सूक्ष्मक्रियस्तदा किंचिंगतयोगः ॥ १ ॥ तमपि स योगं सूक्ष्मं निरुरुत्सन् सर्वपर्ययानुग-
तम् । सूक्ष्मक्रियमप्रतिपात्युपयाति ध्यानमतमस्क ॥ २ ॥" मित्यादि, सूक्ष्मकाययोगं च निरुन्धानः प्रथमसमये किट्टीनाम-
सङ्ख्येयान् भागान् नाशयति, एकस्तिष्ठति, द्वितीयसमये तस्यैव चैकस्य भागस्योद्धरितस्य सम्बन्धिनोऽसङ्ख्येयान् भागान्
नाशयति, एक उद्धरति, एवं समये समये किट्टीस्तावन्नाशयति यावत्सयोग्यवस्थाचरमसमयः, तस्मिंश्च चरमसमये सर्वा-
ण्यपि कर्माण्ययोग्यवस्थासमस्थितिकानि जातानि, येषां च कर्म्मणामयोग्यवस्थायामुदयाभावस्तेषां स्थितिं स्वरूपं प्रतीत्य
समयोनां विधत्ते सामान्यतः, सत्ताकालं प्रतीत्य पुनरयोग्यवस्थासमामिति, तस्मिंश्चायोग्यवस्थाचरमसमये सूक्ष्मक्रियाऽप्र-
तिपाति ध्यानं १ सर्वाकृष्टयः २ सद्वेद्यस्य वन्धो ३ नामगोत्रयोरुदीरणा ४ योगः ५ शुक्ललेश्या ६ स्थित्यनुभागघातश्चे ७ ति
सप्त पदार्था युगपद् व्यवच्छिद्यन्ते, ततोऽनन्तरसमये शैलेशीं प्रतिपद्यते, सर्वसंवरं शीलं तस्येशः शीलेशः तस्येयं योगनि-
रोधावस्था शैलेशी, इयं च मध्यमप्रतिपत्त्या ह्रस्वपञ्चाक्षरोद्गिरणमात्रं कालं भवोपग्राहिकर्म्मक्षपणाय व्युपरतक्रियमप्र-
तिपाति ध्यानमारोहति—"आह ततो देहत्रयमोक्षार्थमनिवर्त्ति सर्ववस्तुगतम् । उपयाति समुच्छिन्नक्रियमतमस्कं परं ध्यानम्
॥ १ ॥" एवं भवोपग्राहिकर्मजालं क्षपयित्वा कर्म्मविमोक्षसमये यावत्स्वाकाशप्रदेशेष्विहावगाढस्तावत्प्रदेशान् ऊर्ध्व-

मप्यवगाहमानो विवक्षितसमयाच्चान्यत् समयान्तरमस्पृशन् गच्छति, उक्तं च चूर्णौ—"जत्तियाए जीवेऽवगाढो तावइयाए ओगाहणाए उड्ढं उज्जुगं गच्छइ, नवकं विइयं च समयं न फुसइ" त्ति, भाष्यकारोऽप्याह—"रिउसेढिं पडिवण्णो समयपएसंतरं अफुसमाणो। एगसमएण सिज्झइ अह सागारोवउत्तो सो ॥ १ ॥" तदानीं च साकारोपयोगोपयुक्तता 'सव्वातो लद्धीतो सागारोवयोगोवउत्तस्स, नो अणागारोवयोगोवउत्तस्से' ति वचनात्, उक्तं च—"सव्वातो लद्धीतो जं सागारोवयोगलाभातो। तेणेह सिद्धिलद्धी उप्पज्जइ तदुवउत्तस्स ॥ १ ॥" तत्र च गतः स भगवान् शाश्वतं कालमवतिष्ठते, तथा चाह—'सिज्झणा चेवे' ति गाथार्थः ॥ साम्प्रतमनन्तरगाथायां यदुपन्यस्तं 'गत्वा समुद्घातं क्षपयन्ति कर्म्म निरवशेष'मिति, तत्र परः प्रश्नयति—समुद्घातगतानां विशिष्टः कर्म्मक्षयो भवतीति किमत्र निबन्धनं ?, उच्यते—प्रयत्नविशेषः, किमत्र निदर्शनमित्यत आह—

जह उल्ला साडीया आसुं सुक्कइ विरल्लिया संती। तह कम्मलहुअसमए वचंति जिणा समुग्घायं ॥ ९५६ ॥

'यथे'त्युदाहरणोपन्यासार्थः, आर्द्रा साटिका, जलेनेति गम्यते, आशु—शीघ्रं शुष्यति—शोषमुपयाति, विरलिता—विस्तारिता सती, तथा तेऽपि भगवन्तो जिनाः प्रयत्नविशेषात् कर्मोदयमधिकृत्याशु शुष्यन्तीति शेषः, यतश्चैवमतः कर्मलघुतासमये कर्म्मणः—आयुष्कस्य लघुता—लघोर्भावो लघुता, स्तोकतेत्यर्थः, तस्याः समयः—कालः कर्मलघुतासमयः, स चान्तर्मुहूर्त्तप्रमाणः तस्मिन्, अथवा कर्म्मभिर्लघुता कर्म्मलघुता, जीवस्येति सामर्थ्यादवसीयते, सा च समुद्घातानन्तरभाविन्येव भूतोपचारं कृत्वा अनागतैव गृह्यते, तस्याः समयस्तस्मिन्, जिना व्रजन्ति समुद्घातं—प्राक् प्रतिपादितस्वरूपमिति ॥ साम्प्रतं

यदुक्तं 'शैलेशीं प्रतिपद्यते सिद्ध्यतिं चे'ति तत्रासावेकसमयेन लोकान्ते सिद्ध्यतीत्यागमः, तत्र कर्म्ममुक्तस्य तद्देशनियमेन गतिः कथमुपपद्यते इति मा भूदव्युत्पन्नविनेयानामाशङ्केति तन्निरासार्थमाह—

लाउअ एरंडफले अग्गी धूमे य उसु धणुविमुक्के। गइपुव्वपओगेणं एवं सिद्धाणवि गईओ (उ) ॥ ९५७ ॥

अलाबु–तुम्बं एरण्डफलमग्निर्धूम इति प्रतीताः, इषुः–शरो धनुर्विमुक्तः–चापप्रेरितः; अमीषां यथा तथारूपगमनकाले स्वभावतस्तन्निबन्धनाभावेऽपि देशादिनियतैव पूर्वप्रयोगेण प्रवर्त्तते, एवमेव, व्यवहिततुशब्दस्य एवकारार्थत्वात्, सिद्धानामपि गतिः प्रवर्त्तते इत्यक्षरार्थः, भावार्थः प्रयोगैर्निर्दिश्यते–तत्र कर्म्मविमुक्तो जीवः सकृदूर्ध्वमेवालोकान्ताद् गच्छति, असङ्गत्वेनोत्पन्नतथाविधपरिणामत्वाद् अष्टमृत्तिकालेपलिप्ताधोनिमग्नक्रमापनीतमृत्तिकालेपजलतलमर्यादोर्ध्वगामितथाविधालाबुवत्, इयमत्र भावना–यथा तुम्बकस्य दर्भान्तरितशुष्काष्टमृल्लेपलिप्तस्य नद्यादिजले निक्षिप्तस्य मृल्लेपासङ्गापगमात् स्वभावत एवोर्ध्वं गतिः प्रवर्त्तते, न तिर्यग् नापि जलोपरितलादपि परतः, तथा तस्यापि सिद्धस्य कर्म्मसङ्गाभावादूर्ध्वमेव गतिः प्रवर्त्तते, नान्यप्रकारेण, नापि लोकोपरितनभागादपि परतः, उक्तं च–"जह मिल्लेवावगमादलाबुणोऽवस्समेव गतिभावो। उड्ढं च नियमतो नऽन्नहा नवा जलाउ उड्ढं च ॥ १ ॥ तह कम्मलेपविगमे गइभावोऽवस्समेव सिद्धस्स। उड्ढं च नियमतो नऽन्नहा नवा लोगपरतो उ ॥ २ ॥" तथा कर्म्मविमुक्तो जीवः सकृदूर्ध्वमेवालोकाद् गच्छति, छिन्नबन्धनत्वेन तथाविधपरिणामत्वात्, तथारूपैरण्डफलवत्, किमुक्तं भवति ?, यथा एरण्डफलस्य बन्धनच्छेदनातपशुष्ककोशविगमेन तथाविधस्वभावभावादूर्ध्वमेव गतिः, एवं विगतकर्म्मनिबन्धनस्य जीवस्यापि, आह च–"एरंडस्स फलं जह बंधच्छेएरियं

दुयं जाइ । तह कम्मवंधणच्छेयणेरितो जाइ सिद्धोऽवि ॥ १ ॥" तथा कर्म्मविमुक्तो जीवः सकृदूर्ध्वमेवालोकात् गच्छति,
तथा स्वाभाविकपरिमाणत्वात्, अग्निधूमवत्, उक्तं च—"उद्धंगइपरिणामो जह जलणस्सा जहेव धूमस्स । उद्धंगतिप-
रिणामो सभावतो तह विमुक्कस्स ॥ १ ॥" तथा कर्म्मविमुक्तो जीवः सकृदूर्ध्वमेवालोकाद् गच्छति, पूर्वप्रयुक्ततत्क्रिया-
तथाविधसामर्थ्यात् धनुःप्रयत्नप्रेरितेषुवत्, यथा धनुषा पुरुषप्रयत्नेन प्रयत्नप्रेरितस्येषोर्गतिकारणविगमेऽपि पूर्वप्रयोगात्
गतिः प्रवर्त्तते एवं कर्म्मविमुक्तस्यापि जीवस्येति भावः, आह च—"जह धणुपुरिसपयत्तेरितेसुणो भिन्नदेसगमणं तु ।
गइकारणविगमंमिवि सिद्धं पुवप्पयोगातो ॥ १ ॥ वंधच्छेयणकिरियाविरमेवि तहा विमुच्चमाणस्स । तस्साऽऽलोगंतातो
गमणं पुवप्पओगातो ॥ २ ॥" उपलक्षणमेतत्, तेन यथा कुलालचक्रं क्रियाहेतुविगमेऽपि पूर्वप्रयोगतः सक्रियं तथा जीव-
स्यापि कर्म्मणा मुच्यमानस्य पूर्वप्रयोगतो गतिरित्यपि निदर्शनं द्रष्टव्यम्, उक्तं च—"जह वा कुलालचक्कं किरियाहेतुविर-
मेऽवि सकिरियं । पुवप्पओगतोच्चिय तह किरिया मुच्चमाणस्स ॥ १ ॥" एवं प्रतिपादिते सत्याह—

कहिं पडिहया सिद्धा ?, कहिं सिद्धा पइट्ठिआ ? । कहिं बुंदिं चइत्ताणं ?, कत्थ गंतूण सिज्झति ? ॥ ९५८ ॥

क्व प्रतिहताः—क्व प्रतिस्खलिताः सिद्धा—मुक्ताः, तथा क्व सिद्धाः तथा प्रतिष्ठिता—व्यवस्थिताः, वोंदिः—तनुः शरीरमि-
त्यनर्थान्तरं, क्व वोंदिं त्यक्त्वा—परित्यज्य क्व गत्वा सिद्ध्यन्ति—निष्ठितार्था भवन्ति ?, अत्रानुस्वारलोपो द्रष्टव्यः, अथवा
एकवचनतोऽप्येवमुपन्यासः सूत्रशैल्या अविरुद्ध एव, यतोऽन्यत्रापि प्रयोगः—"वत्थगंधमलंकारं, इत्थीतो सयणाणि य ।
अच्छंदा जे न भुंजंति, न से चाइत्ति वुच्चइ ॥ १ ॥" इति, इत्थं चोदकेनोक्ते सति प्रतिसमाधानमाह—

अलोए पडिहया सिद्धा, लोअग्गे अ पइट्ठिआ । इहं बुंदिं चइत्ताणं, तत्थ गंतूण सिज्झति ॥ ९५९ ॥

अलोके—केवलाकाशास्तिकाये प्रतिहताः—प्रतिस्खलिताः सिद्धाः, इह प्रतिस्खलनं तत्र धर्म्मास्तिकायाद्यभावात् तदानन्तर्यवृत्तिरेव द्रष्टव्यम्, नतु सम्बन्धे सति भित्तौ लोष्टस्येव विघातः, अमूर्त्तत्वात्, तथा लोकाग्रे च—पंचास्तिकायात्मकलोकमूर्ध्नि च प्रतिष्ठिताः, अपुनरागमवृत्त्या व्यवस्थिता इत्यर्थः, तथा इह—अर्द्धतृतीयद्वीपसमुद्रमध्ये बोन्दिं—तनुं मुक्त्वा परित्यज्य सर्वथा, किं ?, तत्र—लोकाग्रे गत्वा—समयप्रदेशान्तरमस्पृशन् गत्वा 'सिद्ध्यन्ति' निष्ठितार्था भवन्ति सिद्ध्यन्ति चेति गाथार्थः ॥ इह 'लोकाग्रे च प्रतिष्ठिता' इत्युक्तं, तत्र शिष्यः प्राह—क्व पुनरसौ लोकान्त इत्यत आह—

ईसीपब्भाराए सीआए जोअणम्मि लोगंतो । बारसहिं जोयणेहिं सिद्धी सव्वत्थसिद्धाओ ॥ ९६० ॥

ईषत्प्राग्भारा—सिद्धभूमिस्तस्याः सीता इति द्वितीयं नाम, तस्या ऊर्ध्वं योजनेऽतिक्रान्ते लोकान्तः, सापि च ईषत्प्राग्भाराख्या सिद्धिः सर्वार्थसिद्धाद् वरविमानादूर्ध्वं द्वादशभिर्योजनैर्भवति, अन्ये तु व्याचक्षते—सर्वार्थसिद्धाद् विमानवरात् द्वादशभिर्योजनैर्लोकान्तक्षेत्रलक्षणेति, तत्त्वं पुनः केवलिनो विदन्ति, तस्मिन् लोकान्ते ईषत्प्राग्भारोपलक्षिते मनुष्यक्षेत्रपरिमाणे सिद्धाः प्रतिष्ठिताः, उक्तं च—"अत्थीसीपब्भारोवलक्खियं मणुयलोगपरिमाणं । लोगग्गनभोभागो सिद्धक्खेत्तं जिणक्खायं ॥ १ ॥" साम्प्रतमस्याः प्राग्भारायाः स्वरूपव्यावर्णनायाह—

निम्मलदगरयवन्ना तुसार—गोखीर—हारसरिवन्ना । उत्ताणयछत्तयसंठिआ अ भणिआ जिणवरेहिं ॥ ९६१ ॥

दकरजः—उदककणिका निर्म्मलं च तत् दकरजश्च निर्म्मलदकरजस्तस्येव वर्णो यस्याः सा निर्म्मलदकरजोवर्णा, तुषारो-

हिमं गोक्षीरहारौ प्रतीतौ, तैः सदृक्–तुल्यो वर्णो यस्याः सा तुषारगोक्षीरहारसदृग्वर्णा, वर्णं उपदर्शितः, संस्थानमु-
पदर्शयति–उत्तानच्छत्रवत् संस्थिता उत्तानच्छत्रसंस्थिता जिनवरैर्भणिता ॥ सम्प्रति परिधिप्रतिपादनेनास्या एवोपायतः
प्रमाणमिधित्सुराह—

एगा जोयणकोडी वायालीसं च सयसहस्साइं। तीसं चेव सहस्सा दो चेव सया अउणवन्ना ॥ ९६२ ॥

इह ईषत्प्राग्भाराया गणनया आयामविष्कम्भाभ्यां पञ्चचत्वारिंशद् योजनलक्षाणि प्रमाणम्, अतो 'विक्खंभवग्गदह-
गुणकरणी वट्टस्स परिरयो होइ' इति परिधिगणितेन परिधिपरिमाणमेका योजनानां कोटी द्वाचत्वारिंशत् शतसहस्राणि
त्रिंशत्सहस्राणि द्वे शते एकोनपञ्चाशदधिके १४२३०२४९, शेषं त्वधिकमल्पत्वान्न विवक्षितं, प्रज्ञापनातो वाऽवसेयमिति ॥
साम्प्रतं अस्या एव बाहल्यं प्रतिपादयति—

बहुमज्झदेसभाए अट्ठेव य जोयणाइं बाहल्लं। चरिमंतेसु अ तणुई अंगुलसंखिज्जई भागं ॥ ९६३ ॥

मध्यदेशभाग एव बहुमध्यदेशभागो, बहुशब्दस्य स्तोकपरिहारार्थमात्रत्वात्, स च बहुमध्यदेशभाग आयामविष्कम्भा-
भ्यामष्टयोजनप्रमाणः, तत्र बाहल्यं–उच्चैस्त्वमष्टैव योजनानि, ततो यथोक्तप्रमाणात् बहुमध्यदेशभागात् बाहल्यमपेक्ष्य
मात्रया तन्वी भवन्ती चरमान्तेषु–पश्चिमान्तेषु अङ्गुलसङ्ख्येयभागं यावद्–अङ्गुलसङ्ख्येयभागमात्रा तन्वी। सा पुनरनेन
क्रमेणेत्थं तन्वीति दर्शयति—

गंतूण जोयणं जोयणं तु परिहाइ अंगुलपुहुत्तं। तीसेवि अ पेरंते मच्छिअपत्ताउ तणुअयरा ॥ ९६४ ॥

यथोक्तप्रमाणात् बहुमध्यदेशभागात् परतः सर्वासु दिक्षु विदिक्षु च योजनं योजनं गत्वा अङ्गुलपृथक्त्वं–नवाङ्गुलप्रमाणं 'परिहाइ'त्ति परिहीयते, एवम्–अनेन प्रकारेण हानिभावे सति तस्याः–तावत्प्रमाणमहत्याः पृथिव्याः, अपिशब्दो भिन्नक्रमे, मक्षिकापत्रादपि तनुतरा, किमुक्तं भवति ?, घृतपूर्णतथाविधकरोटिकाकारेति भावः, स्थापना [ ] अस्याश्चोपरि योजनचतुर्विंशतिभागे सिद्धाः, तथा चाह—

ईसीपब्भाराए उवरिं खलु जोअणस्स जो कोसो। कोसस्स य छब्भाए सिद्धाणोगाहणा भणिआ ॥ ९६५ ॥

ईषत्प्राग्भारायाः पृथिव्या उपरि यत् खलु योजनं तस्य योजनस्य उपरितनः क्रोशो–गव्यूतं तस्य क्रोशस्योपरितने भागे सिद्धानामवगाहना तीर्थकरगणधरैर्भणिता, 'लोकाग्रे च प्रतिष्ठिता' इति वचनात् ॥ अमुमेवार्थं समर्थयमान आह—

तिण्णि सया तित्तीसा धणुत्तिभागो अ कोसछब्भाए। जं परमोगाहोऽयं तो ते कोसस्स छब्भाए ॥ ९६६ ॥

त्रीणि धनुषां शतानि त्रयस्त्रिंशदधिकानि धनुषस्त्रिभागश्च, एवंप्रमाणश्च क्रोशस्य षड्भागः, यत्–यस्मात् परमः–उत्कृष्टः सिद्धानामयमवगाहो वर्त्तते, ततः–तस्मात् क्रोशस्य षड्भागे सिद्धा इत्युक्तम् ॥ अथ कथं पुनस्तत्र तेषामुपपातोऽवगाहना चेत्यत आह—

उत्ताणउव्व पासिल्लउव्व अहवा निसन्नओ चेव। जो जह करेइ कालं सो तह उववज्जए सिद्धो ॥ ९६७ ॥

उत्तान एव उत्तानकः, पृष्ठतोऽर्द्धावनतादिस्थानतः, पार्श्वस्थितो वा–तिर्यक्स्थितो वा, अथवा निषण्णश्चैवेति प्रक-

टार्थं, किं बहुना ?, यो यथा—येन प्रकारेणावस्थितः सन् कालं करोति स तथा—तेन प्रकारेणोपपद्यते सिद्ध इति ॥ किमित्येतदेवमत आह—

इहभवभिन्नागारो कम्मवसातो भवंतरे होइ । न य तं सिद्धस्स जओ तम्मिवि तो सो तयागारो ॥ ९६८ ॥

इहभवाद्—अधिकृतभवात् भिन्नाकारः इहभवभिन्नाकारो जीवः कर्म्मवशात्—कर्म्मवशेन भवान्तरे—स्वर्गादौ भवति, तदाकारभेदस्य कर्म्मभेदनिबन्धनत्वात्, न च तत्कर्म्म आकारभेदनिबन्धनं यतो—यस्माद् अस्ति ततः तस्मिन्—अपवर्गे असौ—सिद्धस्तदाकारः—पूर्वभवाकारः ॥ तथा किञ्च—

जं संठाणं च(तु) इहं भवं चयंतस्स चरिमसमयम्मि । आसीअ पएसघणं तं संठाणं तहिं तस्स ॥ ९६९ ॥

यदेव, तुशब्दस्य व्यवहितस्यैवकारार्थत्वात्, संस्थानं इह—मनुष्यभवे भवं—संसारं मनुष्यभवं वा त्यजतः सतश्चरमसमये आसीत् प्रदेशघनं तदेव संस्थानं तत्र तस्य भवति ॥ तच्च मनुष्यभवशरीरापेक्षया त्रिभागहीनं, त्रिभागेन रन्ध्रपूरणात्, तथा चाह—

दीहं वा ह्रस्सं वा जं चरिमभवे हविज्ज संठाणं । तत्तो तिभागहीणा सिद्धाणोगाहणा भणिआ ॥ ९७० ॥

दीर्घं वा—पञ्चधनुःशतप्रमाणं, ह्रस्वं वा—हस्तद्वयप्रमाणं, चशब्दान्मध्यमं वा विचित्रं, यच्चरमभवे संस्थानं ततः—तस्मात् संस्थानात् त्रिभागहीना सिद्धानां अवगाहना—अवगाहन्ते अस्यामित्यवगाहना—स्वावस्थैव भणिता तीर्थंकरगणधरैः, कस्मात्रिभागहीनेति चेत्, उच्यते, इह देहे त्रिभागः शुषिरं, ततो योगनिरोधकाले तथाविधप्रयत्नभावतः शुषिरापूरणतस्त्रि-

भागहीनो जातो, न च वाच्यं–संहरणं तावत्प्रदेशानां संभवति, ततः प्रयत्नविशेषतः प्रदेशमात्रोऽपि कस्मान्नावतिष्ठते इति ?, तथाविधसामर्थ्याभावात्, योगनिरोधकालेऽद्यापि सकर्म्मकात् तथा जीवस्वाभाव्याच्च, उक्तं च–"संहारसंभवाओ पएसमित्तंमि किं न संठाइ ?। सामत्थाभावातो सकम्मयातो सभावातो ॥ १ ॥" ततः सिद्धोऽपि तदवस्थ एव भवति, आह च–"देहतिभागो सुसिरं तप्पूरणतो तिभागहीणो उ। सो जोगनिरोहे च्चिय जाओ सिद्धोऽवि तदवत्थो ॥ १ ॥" न च सिद्धस्य सतः प्रदेशसंहारसम्भवः, प्रयत्नाभावाद्, अप्रयत्नस्य गतिरेव कथमिति चेत्, उच्यते, समाहितमेतदसङ्गत्वादिहेतुभिरिति, उक्तं च–"सिद्धोवि देहरहितो सपयत्ताभावतो न संहरइ। अपयत्तस्स किह गई ? नणु भणियमसंगयादीहिं ॥१॥"

साम्प्रतमुत्कृष्टादिभेदमवगाहनामानमभिधित्सुराह—

तिन्नि सया तित्तीसा धणुत्तिभागो य होइ बोद्धव्वो। एसा खलु सिद्धाणं उक्कोसोगाहणा भणिआ ॥९७१॥

त्रीणि धनुषां शतानि त्रयस्त्रिंशानि–त्रयस्त्रिंशदधिकानि धनुस्त्रिभागश्च बोद्धव्यः, एषा–एतावत्प्रमाणा खलु सिद्धानामुत्कृष्टावगाहना भणिता तीर्थकरगणधरैः, ननु भगवती मरुदेव्यपि सिद्धा, सा च नाभिकुलकरपत्नी, नाभेश्च शरीरप्रमाणं पञ्चधनुःशतानि पञ्चविंशत्यधिकानि, यावच्च शरीरप्रमाणं कुलकराणां तावदेव तत्पत्नीनामपि 'संघयणं संठाणं उच्चत्तं चेव कुलगरेहिं सम'मिति वचनात्, ततो मरुदेव्या अपि शरीरप्रमाणं पञ्चधनुःशतानि पञ्चविंशत्यधिकानीति, तस्य त्रिभागे पतिते सिद्धावस्थायाः सार्द्धानि त्रीणि धनुःशतानि अवगाहना प्राप्नोति, कथमुक्तप्रमाणा सिद्धानामुत्कृष्टाऽवगाहनेति ?, नैष दोषः, नाभिकुलकरमानाद्धि प्रमाणतोऽसौ किञ्चिन्न्यूना, तथा सम्प्रदायात्, ततः साऽपि पञ्चधनुःशतप्रमाणैवेत्यदोषः,

यश्च 'कुलगरेहिं सम' मित्यतिदेशः सोऽपि कियता न्यूनाधिक्येऽपि अतिदेशानामागमे दर्शनाद्बाधकः, अथवा भगवती
हस्तिस्कन्धाधिरूढा सती सिद्धा, हस्तिस्कन्धाधिरूढा च सङ्कुचिताङ्गीति यथोक्तावगाहनाया अविरोधः, उक्तं च—"किह
सरुदेवीमाणं ? नाभीतो जेण किंचिदूणा सा । सा किर पंचसयच्चिय अहवा संकोयतो सिद्धा ॥ १ ॥" अधुना
मध्यमावगाहनामानमाह—

चत्तारि अ रयणीओ रयणि तिभागूणिआ अ बोद्धव्वा । एसा खलु सिद्धाणं मज्झिमओगाहणा भणिया ॥९७२॥

चत्वारो रत्नयो-हस्ताः रत्नित्रिभागोना-हस्तत्रिभागोना बोद्धव्याः, एषा-एतावत्प्रमाणा खलु सिद्धानामवगाहना भणिता,
ननु जघन्याजघन्यत्वनिषेधपरं सूत्रमिदं, नत्वेतावदेव मध्यमावगाहनामानं, हस्तद्वयादूर्ध्वं पञ्चधनुःशतेभ्योऽर्वाक् सर्वत्रापि
मध्यमावगाहनाभावात् ॥ सम्प्रति जघन्यावगाहनाप्रतिपादनार्थमाह—

एगा य होइ रयणी अट्ठेव य अंगुलाइं साहीआ । एसा खलु सिद्धाणं जहन्नओगाहणा भणिआ ॥ ९७३ ॥

एका रत्निः अष्टावेव चाङ्गुलानि साधिका, अष्टभिरङ्गुलैरधिका इत्यर्थः, एषा-एतावत्प्रमाणा खलु सिद्धानां जघन्याव-
गाहना भणिता, एषा च द्विहस्तप्रमाणानां कूर्म्मापुत्रादीनामवसातव्या, अन्ये ब्रुवते-सप्तहस्तानामेव यन्त्रपीलनादिना संव-
र्तितगात्राणां सतां सिद्धानामवगन्तव्या ॥ ननु आगमे सिद्धिर्जघन्यपदे सप्तहस्तोच्छ्रितानामभिहिता, ततः कथं उच्यते-
द्विहस्तप्रमाणानां कूर्म्मापुत्रादीनां ?, उच्यते, सा जघन्यपदे सिद्धिस्तीर्थकरानधिकृत्योक्ता, शेषाणां तु केवलिनां सिद्धिर्द्विहस्त-
प्रमाणानामप्यविरुद्धेत्यदोषः, उक्तं च—"सत्तुस्सिएसु सिद्धी जहन्नतो किहमिहं विहत्थेसु ?। सा किर तित्थयरेसुं सेसाणमियं तु

सिद्धाणं ॥ १ ॥ ते पुण होज्ज विहत्था कुम्मीपुत्तादयो जहन्नेणं । अन्ने संवट्टियसत्तहत्थसिद्धस्स हीणत्ति ॥ २ ॥" अथवा यदिदं सूत्रे जघन्यमानमुक्तम्—सप्त हस्ताः उत्कृष्टं पञ्च धनुःशतानि तद् बाहुल्यमधिकृत्योक्तम्, अन्यथा अङ्गुलपृथक्त्वैर्जघन्यपदे धनुःपृथक्त्वैरुत्कृष्टपदे यथाक्रमं हीनमभ्यधिकं वा तद् वेदितव्यम्, तेन कूर्मापुत्रमरुदेव्यादिभिर्न कश्चिद्विरोधः, न खलु आश्चर्यादिकं किंचित् सामान्यश्रुते सर्वमुक्तमस्ति, अथ च अनिबद्धमपि तदस्तीति श्रद्धीयते, पञ्चशतादेशवचनवत्, तथेदमपि सिद्धिं गच्छतो द्विहस्तमानं सपादपञ्चधनुःशतमानं ( च ) श्रद्धीयतामिति, उक्तं च—"बाहल्लतो य सुत्तंमि सत्त पंच य जहन्नमुक्कोसं । इहरा हीणब्भहियं होज्जंगुलधणुपुहुत्तेहिं ॥ १ ॥ अच्छेरयादि किंचिवि सामन्नसुए न देसियं सव्वं । होज्ज व अनिबद्धं चिय पंचसयादेसवयणं व ॥ २ ॥" सांप्रतमुक्तानुवादेनैव संस्थानलक्षणं सिद्धानामभिधातुकाम आह—

ओगाहणाय सिद्धा भवत्तिभागेण होंति परिहीणा । संठाणमणित्थंत्थं जरामरणविप्पमुक्काणं ॥ ९७४ ॥

अवगाहनया सिद्धा भवत्रिभागेन—भवगतशरीरत्रिभागेन परिहीना भवन्ति, ततस्तेषां जरामरणविप्रमुक्तानां संस्थानमनित्थंस्थं वेदितव्यम्, इत्थंप्रकारमापन्नमित्थं इत्थं तिष्ठतीति इत्थंस्थं न इत्थंस्थमनित्थंस्थं, न केनचिदपि लौकिकेन प्रकारेण स्थितमितिभावः । इयमत्र भावना—योगनिरोधकाले देहत्रिभागस्य शुषिरस्य प्रदेशैरापूरणात् पूर्वसंस्थानान्यथाऽव्यवस्थानतः अनियताकारसंस्थानम्, अनियताकारत्वादेव च तदनित्थंस्थमुच्यते, नतु सर्वथा तदभावतः, सिद्धादिगुणेष्वपि यः सिद्धानां 'से न दीहे, न रहस्से' इत्यादिवचनेन दीर्घह्रस्वादीनां प्रतिषेधः सोऽप्यनित्थंस्थसंस्थानत्वादवसेयो, न पुनः सर्वथा तेषामभावतः, उक्तं च—"सुसिरपडिपूरणातो पुव्वागारं तहाणवत्थातो । संठाणमणित्थंत्थं जं भणियं अणिययागारं ॥ १ ॥

एत्तोच्चिय पडिसेहो सिद्धाइगुणेसु दीहयाईणं । जमणित्थंत्थं पुव्वागारावेक्खाए नाभावो ॥ २ ॥" आह–किमेते सिद्धा देशभेदेन स्थिता उत नेति, उच्यते, नेति ब्रूमः, कुत इति चेत्, उच्यते, यस्मात्—

जत्थ य एगो सिद्धो तत्थ अणंता भवक्खयविमुक्का । अन्नोन्नसमोगाढा पुट्ठा सव्वे य लोगंते ॥ १७५ ॥

यत्रैव चशब्दस्यैवकारार्थत्वाद् देशे एकः सिद्धो–निर्वृतः तत्रानंता भवक्षयविमुक्ताः–भवक्षयेण विमुक्ता भवक्षयविमुक्ताः, अनेन स्वेच्छया भवावतरणशक्तिमत्सिद्धव्यवच्छेदमाह, अन्योऽन्यसमवगाढाः तथाविधाचिन्त्यपरिणामवत्त्वात् धर्मास्तिकायादिवत्, 'पुट्ठा सव्वे य लोगंते' इति स्पृष्टा–लग्नाः सर्वे लोकान्ते, पाठान्तरं वा 'पुट्ठो सव्वेहिं लोगंतो' स्पृष्टः सर्वैर्लोकान्तः 'लोकाग्रे च प्रतिष्ठिता' इति वचनात् । तथा—

फुसइ अणंते सिद्धे सव्वपएसेहिं सव्वतो सिद्धो । तेऽवि असंखेज्जगुणा देसपएसेहिं जे पुट्ठा ॥ १७६ ॥

स्पृशत्यनन्तान् सिद्धान् सर्वप्रदेशैरात्मसंबन्धिभिः 'नियमसो'त्ति नियमतो–नियमेन सिद्धः, तथा तेऽप्यसंख्येयगुणा वर्तन्ते ये देशप्रदेशैः स्पृष्टाः, ते केभ्योऽसंख्येयगुणा इति चेत्, उच्यते, सर्वप्रदेशस्पृष्टेभ्यः, कथमिति चेत्, उच्यते, इह एकस्य सिद्धस्य यदवगाहनाक्षेत्रं तत्रैकस्मिन्नपि परिपूर्णे क्षेत्रे अवगाढास्तेऽनंताः, ये च मूलक्षेत्रादेकप्रदेशवृद्ध्याऽवगाढास्तेऽपि प्रत्येकमनन्ताः, एवं द्वित्रिचतुष्पञ्चादिप्रदेशवृद्ध्या ये अवगाढास्तेऽपि प्रत्येकमनन्ताः, तथा तस्य मूलक्षेत्रस्य एकैकं प्रदेशं परित्यज्य येऽवगाढास्तेऽपि प्रत्येकमनन्ताः, एवं द्वित्रिचतुष्पञ्चप्रदेशादिहान्या ये अवगाढास्तेऽपि प्रत्येकमनन्ताः, एवं च सति प्रदेशपरिवृद्धिहानिभ्यां ये समवगाढास्ते परिपूर्णक्षेत्रावगाढेभ्योऽसंख्येयगुणा भवन्ति, असंख्येयप्रदे-

शात्स्वैकैकसिद्धावगाहक्षेत्रे प्रतिप्रदेशपरिवृद्धिहानिभ्यां प्रतिप्रदेशमनन्तानां सिद्धानामवगाहनात् ॥ स्थापना चेयम् । उक्तं च—"एक्कक्खेत्तेऽणंता पएसपरिवड्ढिहाणिए तत्तो । होंति असंखेज्जगुणाऽसंखपएसो जमवगाहो ॥ १ ॥" सांप्रतं सिद्धानेव लक्षणतः प्रतिपादयति—

असरीरा जीवघणा उवउत्ता दंसणे य णाणे य । सागारमणागारं लक्खणमेयं तु सिद्धाणं ॥ ९७७ ॥

अविद्यमानशरीराः अशरीराः, औदारिकादिपञ्चविधशरीररहिता इत्यर्थः, जीवाश्च ते घनाश्च शुषिरापूरणात् जीवघनाः, उपयुक्ता दर्शने च—केवलदर्शने ज्ञाने च—केवलज्ञाने । इह सामान्यसिद्धलक्षणमेतदितिज्ञापनार्थं सामान्यालंबनदर्शनाभिधानमादावुक्तम्, तथा च सामान्यविषयं दर्शनं विशेषविषयं ज्ञानं, तत् साकारानाकारं—सामान्यविशेषरूपं लक्षणं—तदन्यव्यावृत्तं स्वस्वरूपम् एतद्—अनन्तरोक्तम्, तुशब्दो निरुपमसुखसंचयार्थः, सिद्धानां—निष्ठितार्थानामिति ॥ संप्रति केवलज्ञानदर्शनयोरशेषविषयतामुपदर्शयति—

केवलनाणुवउत्ता जाणंती सव्वभावगुणभावे । पासंति सव्वतो खलु केवलदिट्ठीहिं णंताहिं ॥ ९७८ ॥

केवलज्ञानेनोपयुक्ताः, न त्वन्तःकरणेन, तदभावात्, केवलज्ञानोपयुक्ताः जानन्ति—अवगच्छन्ति—सर्वभावगुणभावान् सर्वपदार्थगुणपर्यायान्, प्रथमो भावशब्दः पदार्थवचनः, द्वितीयः पर्यायवचनः, गुणपर्यायभेदस्त्वयं सहवर्तिनो गुणाः, क्रमवर्तिनः पर्यायाः, तथा पश्यन्ति सर्वतः खलु, खलुशब्दस्यावधारणार्थत्वात् सर्वत एव, केवलदृष्टिभिरनन्ताभिः केवलदर्शनैरनन्तैः, अनन्तत्वात् सिद्धानाम्, इहादौ ज्ञानग्रहणं प्रथमतया तदुपयोगस्थाः सिध्यन्तीति ज्ञापनार्थम् ।

आह–किमेते युगपज्जानन्ति पश्यन्ति च आहोस्विदयुगपदिति, उच्यते, अयुगपत्, कथमेतदवसीयते इति चेत्, यत आह—

नाणंमि दंसणंमि य एत्तो एगयरयंमि उवउत्ता। सवस्स केवलिस्सा जुगवं दो नत्थि उवओगा॥ ९७९॥

सर्वस्य केवलिनः सतो युगपद्–एक-ज्ञाने दर्शने च 'एत्तो' त्ति अनयोः एकतरस्मिन् उपयुक्ताः, 'किं' मिति ?, यतः सर्वस्य केवलिनः सतो युगपद्–एक-स्मिन् काले द्वौ न स्त उपयोगौ, तत्स्वाभाव्यात्, क्षायोपशमिकसंवेदने तथादर्शनात्, अत्र बहु वक्तव्यं तच्च नंद्यध्ययनटीकातोऽवसेयमिति॥ सांप्रतं निरुपमसुखभाजस्ते इत्युपदर्शयन्नाह—

नवि अत्थि माणुसाणं तं सोक्खं नविय सवदेवाणं। जं सिद्धाणं सोक्खं अवाबाहं उवगयाणं॥ ९८०॥

यत् सिद्धानां सौख्यं अ-व्याबाधमुपगतानां–विविधा आबाधा व्याबाधा न व्याबाधा अव्याबाधा तां उप–सामीप्येन गतानां–प्राप्तानां॥ यथा नैवास्ति मानुषाणां–चक्रवर्त्यादीनामपि तत् सौख्यं, न चैव देवानामनुत्तरसुरपर्यन्तानामपि, यत् सिद्धानां सौख्यं अ-व्याबाधमुपगतानां नास्ति तथा भङ्ग्योपदर्शयति—

सुरगणसुहं समत्तं सवद्धापिंडियं अणंतगुणं। नय पावइ मुत्तिसुहं णंताहिवि वग्गवग्गूहिं॥ ९८१॥

सुरगणसुखं समस्तं–समस्तदेवसंघातसुखं समस्तं–संपूर्णं, अतीतानागतवर्तमानकालोद्भवमित्यर्थः, पुनः 'सर्वाद्धापिंडितं' सर्वकालसमयैर्गुणितं, ततः पुनरप्यनंतगुणम्, किमुक्तं भवति ?–सर्वाद्धासमयगुणितं सत् यावत्प्रमाणं भवति तावत्प्रमाणं किलासत्कल्पनया एकैकस्मिन्नाकाशप्रदेशे स्थाप्यते, इत्येवं सकललोकाकाशानन्तप्रदेशपूरणलक्षणेनानन्तगुणकारेण गुणि-

तमिति, एवंप्रमाणस्य सतः पुनर्वर्गो विधीयते, तस्यापि वर्गितस्य भूयो वर्गः, एवमनन्तैर्वर्गैर्वर्गैर्वर्गितं तथापि तथाप्रकर्षगतमपि मुक्तिसुखं-सिद्धिसुखं न प्राप्नोति ॥ तथा चैतदभिहितार्थानुवाद्याह—

सिद्धस्स सुहो रासी सव्वद्धापिंडितो जइ हवेज्जा । सोऽणंतवग्गभइतो सव्वागासे न माइज्जा ॥ ९८२ ॥

सिद्धसम्बन्धी सुखानां राशिः, सुखसंघात इत्यर्थः, सर्वाद्धापिण्डितः-सर्वकालसमयगुणितः सव्वागासे न माइज्जत्तीत्यादि, अन्यथा नियतदेशावस्थितिस्तेषां कथमिति सूरयोऽभिदधतीति ॥ तथा चैतत्संवाद्यार्षवेदेऽप्युक्तमित्यलं व्यासेनेति ॥ सांप्रतमेवंरूपस्यापि सतोऽप्यस्य निरुपमतां प्रतिपादयति—

जह नाम कोइ मिच्छो नगरगुणे बहुविहे वियाणंतो । न चएइ परिकहेउं उवमाइ तहिं असंतीए ॥ ९८३ ॥

यथा नाम कश्चित् म्लेच्छो नगरगुणान् सद्गृहनिवासादीन् बहुविधान्-अनेकप्रकारान् विजानन् अरण्यगतः सन् अन्यम्लेच्छेभ्यो न शक्नोति परिकथयितुम्, कुतो निमित्तादित्यत आह-उपमायां तत्रासत्यां, तद्विषये उपमाया अभावादिति भावः । एष गाथाक्षरार्थः, भावार्थः कथानकादवसेयः, तच्चेदम्-एगो महारण्णवासी मिच्छो रण्णे चिट्ठइ, इतो य-एगो राया आसेण अवहरितो तं अडविं पवेसितो, तेण दिट्ठो, सक्कारेऊण जणवयं नीतो, रण्णावि सो नगरमाणितो, पच्छा उवगारित्तिगाढमुवचरितो, जहा राया तहा चिट्ठइ, धवलघराइभोगेणं विभासा, काले रण्णं सरिउमाढत्तो, रण्णा विसज्जितो, ततो रण्णिगा पुच्छंति-केरिसं नगरंति ?, सो वियाणंतोवि तत्थोवमाभावा न सक्कइ नगरगुणे परिकहेउं । एष दृष्टान्तः, अयमर्थोपनयः—

इय सिद्धाणं सोक्खं अणोवमं नत्थि तस्स ओवम्मं । किंचिविसेसेणेत्तो सारिक्खमिणं सुणह वोच्छं ॥ ९८४ ॥

इति—एवमुक्तेन प्रकारेण सिद्धानां सौख्यमनुपमं वर्तते, किमित्यत आह—यतो नास्ति तस्य औपम्यं—उपमीयमानता, उपमानासंभवात्, तथापि चात्मनः प्रतिपत्तये किंचिद्विशेषेण 'एत्तो' त्ति आर्षत्वाद् अस्याः सादृश्यमिदं—वक्ष्यमाणलक्षणं शृणुताहं वक्ष्ये इति ॥ प्रतिज्ञातमेव निर्वाहयति—

जह सव्वकामगुणियं पुरिसो भोत्तूण भोयणं कोई । तण्हाछुहाविमुक्को अच्छेज्ज जहा अमियतत्तो ॥ ९८५ ॥

यथेत्युदाहरणोपन्यासार्थः, सर्वकामगुणितं—सकलसौन्दर्यसंस्कृतं, भोजनं भुज्यते इति भोजनं 'कृद्‌बहुल' मिति वच-
नात् कर्म्मण्यनट्, कश्चित् पुरुषो भुक्त्वा तृट्क्षुद्विमुक्तः सन् यथा आसीनः अमृततृप्तः, आवाधारहितत्वात् । इह
रसनेन्द्रियमधिकृत्येष्टविषयप्राप्त्या औत्सुक्यविनिवृत्तेः सुखप्रदर्शनं सकलेन्द्रियार्थावाप्त्या शेषौत्सुक्यनिवृत्त्युपलक्षणार्थः,
अन्यथा बाधांतरसंभवतः सुखाभावः स्यात्, सर्ववाधाविगमेन चात्र प्रयोजनम्, उक्तं च—"वेणुवीणामृदङ्गादिनाद-
युक्तेन हारिणा । श्लाघ्यस्वरकथाबद्धगीतेन स्तिमितः सदा ॥ १ ॥ कुट्टिमादिविचित्राणि, दृष्ट्वा रूपाण्यनुत्सुकः । लोचनान-
न्ददायीनि, लीलावन्ति स्वकानि हि ॥ २ ॥ अम्बरागुरुकर्पूरधूपगन्धानितस्ततः । पटवासादिगन्धांश्च, व्यक्तमाघ्राय
निःस्पृहः ॥ ३ ॥ नानारससमायुक्तं, भुक्त्वाऽन्नमिह मात्रया । पीत्वोदकं च तृप्तात्मा, स्वादयन् स्वादिमं शुभम् ॥ ४ ॥
मृदुतूलीसमाक्रान्तदिव्यपर्यंकसंस्थितः । सहसाऽम्भोदसंशब्दश्रुतेर्भयघनं भृशम् ॥ ५ ॥ इष्टभार्यापरिष्वक्तद्रतांतेऽथवा

नरः । सर्वेन्द्रियार्थसंप्राप्त्या, सर्वाबाधानिवृत्तिजम् ॥ ६ ॥ यद्वेदयति संहृष्टं, प्रशान्तेनान्तरात्मना । मुक्तात्मनस्ततोऽनंतं, सुखमाहुर्मनीषिणः ॥ ७ ॥ इति ॥

**इय सव्वकालतित्ता अउलं निव्वाणमुवगया सिद्धा । सासयमव्वाबाहं चिट्ठंति सुही सुहं पत्ता ॥ ९८६ ॥**

इति-एवमुक्तेन प्रकारेण सर्वकालतृप्ताः, स्वस्वभावावस्थितत्वात्, अतुलं निर्वाणमुपगताः सिद्धाः, सर्वदा सकलौत्सुक्यनिवृत्तेः, यतश्चैवमतः शाश्वतं-सर्वकालभावि, अव्याबाधं-व्याबाधपरिवर्जितं सुखं प्राप्ताः सुखिनस्तिष्ठन्ति । अथ सुखं प्राप्ता इत्युक्ते सुखिन इत्यनर्थकं, नैष दोषः, अस्य दुःखाभावमात्रमुक्तिसुखनिरासेन वास्तवसुखप्रतिपादनार्थत्वात्, तथा हि अशेषदोषक्षयतः शाश्वतमव्याबाधं सुखं प्राप्ताः सन्तः सुखिनस्तिष्ठन्ति, न तु दुःखाभावमात्रान्विता एवेति ॥ सांप्रतं वस्तुतः सिद्धपर्यायशब्दान् प्रतिपादयति—

**सिज्झंत्ति अ बुज्झंत्ति य पारगयत्ति य परंपरगयत्ति य । उम्मुक्ककम्मकवया अजरा अमरा असंगा य ॥ ९८७ ॥**

सिद्धा इति कृतकृत्यत्वात्, बुद्धा इति केवलज्ञानदर्शनाभ्यां विश्वावगमात्; पारगता इति भवार्णवपारगमनात्, परम्परया गताः परम्परागताः उन्मुक्तकर्मपरंपरागता इति पुण्यबीजसम्यक्त्वज्ञानचरणक्रमतत्प्रतिपत्त्युपायमुक्तत्वात् परम्परया गताः परम्परागताः उन्मुक्तकर्मकवचाः सकलकर्मवियुक्तत्वात्, तथा अजरा वयसोऽभावात्, अमरा आयुषोऽभावात्, असङ्गाश्च सकलक्लेशाभावात् ॥ साम्प्रतमुपसंहरति—

**निच्छिन्नसव्वदुक्खा जाइजरामरणबंधणविमुक्का । अव्वाबाहं सोक्खं अणुहवयंती सया कालं ॥ ९८८ ॥**

निस्तीर्णम्—अतिक्रान्तं सर्वम्—अशेषं दुःखं यैस्ते निस्तीर्णसर्वदुःखाः, जातिः—जन्म जरा—वयोहानिः मरणं—प्राणत्यागः बन्धनं—संसारबन्धहेतुरष्टप्रकारं कर्म्म तैर्विमुक्ताः, अव्याबाधं—व्याबाधारहितं सौख्यं सदाकालमनुभवन्ति ॥ उक्ताः सिद्धाः, सम्प्रति तन्नमस्कारवक्तव्यतामाह—

सिद्धाण नमक्कारो जीवं मोएइ भवसहस्सातो । भावेण कीरमाणो होइ पुणो बोहिलाभाए ॥ ९८९ ॥

सिद्धाण नमोक्कारो धन्नाण भवक्खयं करेंताण । हिययं अणुम्मुयंतो विसोत्तियावारओ होइ ॥ ९९० ॥

सिद्धाण नमोक्कारो एवं खलु वन्नितो महत्थोत्ति । जो मरणंमि उवग्गे अभिक्खणं कीरए बहुसो ॥ ९९१ ॥

सिद्धाण नमोक्कारो, सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं, बीयं हवइ मंगलं ॥ ९९२ ॥

गाथाचतुष्टयमपि अर्हन्नमस्कारवद्वेदितव्यम् ॥ उक्तः सिद्धनमस्काराधिकारः, साम्प्रतमाचार्यनमस्कारावसरः, अथ आचार्य इति कः शब्दार्थः ?, उच्यते, 'चर गतिभक्षणयोः' आङ्पूर्वः, आचर्यते कार्यार्थिभिः सेव्यते इति आचार्यः, "ऋवर्णव्यञ्जनान्ताद् घ्यणि"ति घ्यण्, अयं च नामादिभेदाच्चतुष्प्रकारः, तथा चाह—

नामंठवणादविए भावंमि चउविहो उ आयरियो । दव्वंमि एगभवियाइ लोइए सिप्पसत्थाइ ॥ ९९३ ॥

नामाचार्यः स्थापनाचार्यः द्रव्याचार्यः भावाचार्यश्च, तत्र नामस्थापनाचार्यौ सुगमौ, द्रव्याचार्यं आगमनोआगमादिभेदं प्रायः सर्वत्र तुल्यविचारत्वात् अनादृत्य ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्याचार्यमभिधातुकाम आह—'दव्वंमि' इत्यादि, द्रव्ये—द्रव्याचार्ये विचार्यमाणेऽनेकभेदाः, तद्यथा—एकभविको बद्धायुरभिमुखनामगोत्रश्च, तत्र एकेन भवेन भावी

य आचार्यः स एकभविकः, आचार्यभवयोग्यनिवद्धायुर्वद्धायुष्कः, आचार्यभवानुगते यस्य नामगोत्रे उदयाभिमुखे सोऽभिमुखनामगोत्रः, तथाविधो द्रव्याचार्यः मूलगुणनिर्मित उत्तरगुणनिर्मितश्च, तत्र मूलगुणनिर्मित आचार्यशरीरनिर्वर्तनयोग्यानि द्रव्याणि, उत्तरगुणनिर्मितस्तु तान्येव तदाकारपरिणतानीति, अथवा द्रव्यभूतोऽप्रधान आचार्यो द्रव्याचार्यः, द्रव्यनिमित्तं वा य आचारवान् स द्रव्याचार्यः, भावाचार्यो द्विधा—लौकिको लोकोत्तरश्च, तत्र लौकिकः शिल्पशास्त्रादिः, एतच्चैवमुच्यते तत्परिज्ञानात् तदभेदोपचारेण, अन्यथा शिल्पादिग्राहको गृह्यते, अन्ये तु लौकिकलोकोत्तरभेदमकृत्वा सामान्यत एनमपि द्रव्याचार्यं व्याचक्षते, यथा—शिल्पशास्त्रादिपरिज्ञाता, यथा शिल्पशास्त्रादिपरिज्ञाननिमित्तमाचार्यमाणो द्रव्याचार्य इति ॥ अधुना लोकोत्तरान् भावाचार्यान् प्रतिपादयति—

पंचविहं आयारं आयरमाणा तहा पगासंता । आयारं दंसंता आयरिया तेण वुच्चंति ॥ ९९४ ॥

पञ्चविधं—पञ्चप्रकारं ज्ञानदर्शनचारित्रतपोवीर्यभेदात्, आचारं—आङ् मर्यादायां चरणं चारः मर्यादया—कालनियमादिलक्षणया चार आचारः, उक्तं च—"काले विणए बहुमाणे उवहाणे"त्यादि, आचरन्तः सन्तोऽनुष्ठानरूपेण, तथा प्रभाषमाणा अर्थान्वाख्यानेन, तथा प्रत्युपेक्षणादिक्रियाद्वारेणाचारं दर्शयंतः सन्तो मुमुक्षुभिराचर्यन्ते—सेव्यन्ते येन कारणेन आचार्यास्तेन कारणेनोच्यन्ते ॥ अमुमेवार्थं स्पष्टयन्नाह—

आयारो नाणाई तस्सायरणा पभासणातो वा । जे ते भावायरिया भावायारोवउत्ता य ॥ ९९५ ॥

आचारो—ज्ञानादिः पञ्चप्रकारः तस्याचरणात् प्रभाषणात् वाशब्दाद् दर्शनाद्वा हेतोर्मुमुक्षुभिराचर्यन्ते—सेव्यन्ते ते

भावाचार्या उच्यन्ते, एतच्चाचरणादि अनुयोगेऽपि सम्भवति यतस्तत आह–भावाचारोपयुक्ताश्च भावार्थमाचारो भावा-
चारस्तदुपयुक्ताश्च ॥

आयरियनमोक्कारो जीवं मोएइ भवसहस्सातो । भावेण कीरमाणो होइ पुणो बोहिलाभाय ॥ ९९६ ॥
आयरियनमोक्कारो धन्नाण भवक्खयं करेंताण । हिययं अणुम्मुयंतो, विसोत्तियावारतों होइ ॥ ९९७ ॥
आयरियनमोक्कारो एवं खलु वन्नितो महत्थोत्ति । जो मरणंमि उवग्गे अभिक्खणं कीरए बहुसो ॥ ९९८ ॥
आयरियनमोक्कारो, सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं, तइयं हवइ मंगलं ॥ ९९९ ॥

गाथाचतुष्टयमपि अर्हन्नमस्कारवदवसेयम्, विशेषस्तु सुगम एवेति ॥ उक्त आचार्यनमस्काराधिकारः, साम्प्रतमुपा-
ध्यायनमस्कारावसरः, उपाध्याय इति कः शब्दार्थः ?, उच्यते, 'इङ् अध्ययने' उपपूर्वः, उपेत्य–समीपमागत्य अधीयते
साधवः सूत्रमस्मादित्युपाध्यायः, स च नामादिभेदाच्चतुष्प्रकारः, तथा चाह–

नामंठवणादविए भावंमि चउव्विहो उवज्झातो । दव्वे लोइयसिप्पाइ निण्हगा वा इमे भावे ॥ १००० ॥

नामोपाध्यायः स्थापनोपाध्यायो द्रव्योपाध्यायो भावोपाध्यायश्चेत्येवं चतुर्विध उपाध्यायः, तत्र नामस्थापनोपाध्यायौ
सुगमौ, द्रव्योपाध्यायो ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्विधा–लौकिको लोकोत्तरश्च, तत्र लौकिकः शिल्पादिः, तच्चैवमुच्यते
तत्परिज्ञानात् तदभदोपचारेण, अन्यथा शिल्पादिशास्त्राध्यापका गृह्यन्ते, लोकोत्तरा निह्नवाः, ते हि अभिनिवेशदोषेणैक-
मपि पदार्थमन्यथा प्ररूपयंतो मिथ्यादृष्टय एवेति द्रव्योपाध्यायाः, इमे–वक्ष्यमाणस्वरूपाः पुनर्भावोपाध्यायाः॥ तानेवाह—

वारसंगो जिणक्खातो अज्झातो देसितो (कहितो हा०) वुहेहिं । तं उवइसंति जम्हा उवज्झाया तेण वुचंति १००१
द्वादशाङ्गः–आचारादिः, द्वादशाङ्गसद्भावात्, जिनाख्यातः–अर्हत्प्रणीतः अध्यायो, वाचनादिनिवन्धनत्वादिह सूत्र-
मेव गृह्यते, कथितो वुधैः–गणधरादिभिः, यं इति गम्यते, तं स्वाध्यायमुपदिशन्ति वाचनारूपेण यस्मात्कारणात्तेनोच्यन्ते
उपाध्यायाः, उपेत्याधीयते यस्मादित्यन्वर्थोपपत्तेः ॥ साम्प्रतमागमशैल्या अक्षरार्थमधिकृत्योपाध्यायशब्दार्थमाह—
उत्ति उवयोगकरणे झत्ति य झाणस्स होइ निद्देसे । एएण होइ उज्झा एसो अन्नोऽवि पज्जातो ॥ १००२ ॥
उ इत्येतदक्षरं उपयोगकरणे वर्त्तते, झ इति चेदं ध्यानस्य निर्देशे भवति, ततः प्राकृतशैल्या एतेन कारणेन भवंति
उज्झा, उपयोगपुरस्सरं ध्यानकर्त्तार इत्यर्थः, एषोऽन्योऽपि पर्यायः ॥ अथवा—
उत्ति उवयोगकरणे वत्ति य पावपरिवज्जणे होइ । झत्ति य झाणस्स कए उत्ति य ओसक्कणा कम्मे ॥ १००३ ॥
उ इत्येतदक्षरं उपयोगकरणे वर्त्तते, व इति पापस्य परिवर्जने भवति, झ इति ध्यानस्य कृते–करणे निर्दिश्यते, उ इति
अवष्वष्कणा कर्म्मणीत्येतस्मिन्नर्थे, एषोऽत्र समुदायार्थः–उपयोगपूर्वकं पापपरिवर्ज्जनतो ध्यानारोहणेन कर्मापनयन्ती-
त्युपाध्याया इति । अक्षरार्थाभावे हि पदार्थाभावः, पदस्य तत्समुदायरूपत्वादित्यक्षरार्थः प्रतिपत्तव्य इति ॥
उवज्झायनमोक्कारो जीवं मोएइ भवसहस्सातो । भावेण कीरमाणो होइ पुणो बोहिलाभाए ॥ १००४ ॥
उवज्झायनमोक्कारो धन्नाण भवक्खयं करंताणं । हिययं अणुम्मुयंतो विसोत्तियावारओ होइ ॥ १००५ ॥
उवज्झायनमोक्कारो एवं खलु वन्निओ महत्थोत्ति । जो मरणंमि उवग्गे अभिक्खणं कीरए बहुसो ॥ १००६ ॥

उवज्झायनमोक्कारो, सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं, चउत्थं हवइ मंगलं ॥ १००७ ॥

गाथाचतुष्टयमपि सामान्येनार्हन्नमस्कारवदवसेयम्, विशेषस्तु सुगम एव, इत्युक्त उपाध्यायनमस्काराधिकारः । अथ साधुरिति कः शब्दार्थः ?, उच्यते—अभिलषितमर्थं साधयतीति साधुः, "कृवापाजी' त्यादिना उणप्रत्ययः, सच नामादिभेदाच्चतुष्प्रकारः, तथा चाह—

नामंठवणासाहू दव्वसाहू य भावसाहू य । दव्वंमि लोइयादी भावंमि य संजतो साहू ॥ १००८ ॥

नामसाधुः स्थापनासाधुः द्रव्यसाधुर्भावसाधुश्च, तत्र नामस्थापनासाधू सुगमौ, द्रव्यसाधुर्ज्ञशरीरभव्यशरीरव्यतिरिक्तः लौकिकादिस्त्रिविधः, तद्यथा—लौकिको लोकोत्तरः कुप्रावचनिकश्च, तत्र यो लोके शिष्टसमाचारः घटपटादिसाधको वा स लौकिकः, कुप्रवचनेषु निजनिजसमाचारसम्यक्परिपालनरतः कुप्रावचनिकश्च, तत्र यो लोके शिष्टसमाचारः घटपटादिसाधको वा स लौकिकः, कुप्रवचनेषु निजनिजसमाचारसम्यक्परिपालनरतः कुप्रावचनिकः, लोकोत्तरे निह्नवः, अन्यथा पदार्थप्ररूपणतस्तस्य मिथ्यादृष्टित्वात्, शिथिलव्रतो वा वेषमात्रधारणात्, भावे विचार्यमाणे साधुः संयतः—सम्यग् जिनाज्ञापुरस्सरं सकलसावद्यव्यापारादुपरतः ॥ सम्प्रति लौकिकादिद्रव्यसाधुप्रतिपादनार्थमाह—

घडपडरहमाईणि साहेंता होंति दव्वसाहू य । अहवावि दव्वभूया ते होंती दव्वसाहुत्ति ॥ १००९ ॥

घटपटरथादीनि, आदिशब्दात् गृहदेवकुलादीनां कुप्रवचने निजनिजसमाचाराणां च परिग्रहः, तान् साधयन्तो भवंति द्रव्यसाधवः, अभिलषितमर्थं साधयन्तीति साधवः इत्यन्वर्थघटनात्, मोक्षाङ्गताविरहतश्च द्रव्यरूपत्वात्, तत्र घटपटादि-

साधका लौकिका द्रव्यसाधवः, कुप्रवचनक्रियासाधकाः कुप्रावचनिकाः साधवः, लोकोत्तरद्रव्यसाधुप्रतिपादनार्थमाह, अथ-
वाऽपि द्रव्यभूताः अप्रधाना जिनाज्ञाबहिर्भावात् साधवो भवन्ति द्रव्यसाधवः ॥ सम्प्रति भावसाधून् प्रतिपादयति—

निव्वाणसाहए जोगे, जम्हा साहेंति साहुणो । समा य सव्वभूएसु, तम्हा ते भावसाहुणो ॥ १०१० ॥

निर्वाणसाधकान् योगान्—सम्यग्दर्शनादिप्रधानान् व्यापारान् साधयन्ति साधवः, विहितानुष्ठानपरत्वात्, समाश्च सर्वभूतेषु, एतच्च योगप्राधान्यख्यापनार्थमुक्तम्, तस्मात् भवंति भावसाधवः ॥

किं पेच्छसि साहूणं तवं च नियमं च संजमगुणं वा ? । तो वंदसि साहूणं एअं मे पुच्छिओ साह ॥ १०११ ॥

किं साधूनां प्रेक्षसे त्वं तपो वा—अनशनादिकं नियमं वा—द्रव्याभिग्रहादिकं संयमगुणं वा—पञ्चाश्रवविरमणादिकं ?, ततो वन्दसे साधून् ?, सूत्रे षष्ठी द्वितीयार्थे, अथवा 'मापाणामश्नीया' दित्यादाविव क्रियायोगेऽपि सम्बन्धविवक्षया षष्ठी, एतन्मे पृष्टः सन् साधय—कथय ॥ एवमुक्ते गुरुराह—

विसयसुहनियत्ताणं विसुद्धचारित्तनियमजुत्ताणं । तच्चगुणसाहगाणं सदायकिच्चुज्जुआण नमो ॥ १०१२ ॥

सर्वत्र सूत्रे षष्ठी चतुर्थ्यर्थे प्राकृतत्वात्, 'छट्ठिविभत्तीए भण्णइ चउत्थी' ति वचनात्, ततोऽयमर्थः—विषयसुखनिवृत्तेभ्यो—मनोज्ञरूपालोकनादिप्रसक्तिविरतेभ्यः, तथा विशुद्धं यच्चारित्रं—प्राणातिपातादिविरमणपरिणामात्मकं 'चारित्तं परिणामो जीवस्स सुहो य होइ नायव्वो' इति वचनात्, यश्च नियमो विचित्रो—द्रव्याभिग्रहादिस्ताभ्यां युक्तेभ्यः, तथा तथ्याः—तात्त्विका ये गुणाः—क्षान्त्यादयस्तेषां साधकेभ्यः, तथा साधनानि—मोक्षसाधनानि यानि कृत्यानि—प्रत्युपेक्षणादीनि तेषूद्यच्छंते तेभ्यो

नमः, किमुक्तं भवति ?, विषयसुखनिवृत्त्यादीन् मोक्षसाधकान् परमगुणानेतेषु प्रेक्षामहे तत एतान्नमस्कुर्म्मं इति ॥ तथा—

असहाये सहायत्तं करेंति मे संजमं करेंतस्स । एएण कारणेणं नमामऽहं सव्वसाहूणं ॥ १०१३ ॥

परमार्थसाधनप्रवृत्तौ सत्यां जगत्यसहाये सति, प्राकृतशैल्या वा षष्ठ्यर्थे सप्तमी, असहायस्य मम संयमं कुर्वतः सतः सहायत्वं कुर्वन्ति, अनेन कारणेन नमाम्यहं सर्वसाधूनामिति ॥

साहूण नमोक्कारो जीवं मोएइ भवसहस्साओ । भावेण कीरमाणो होइ पुणो बोहिलाभाए ॥ १०१४ ॥

साहूण नमुक्कारो धन्नाण भवक्खयं करेंताणं । हिययं अणुम्मुयंतो विसोत्तियावारओ होइ ॥ १०१५ ॥

साहूण नमुक्कारो एवं खलु वन्नितो महत्थोत्ति । जो मरणंमि उवग्गे अभिक्खणं कीरए बहुसो ॥ १०१६ ॥

साहूण नमोक्कारो, सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं, पंचमं हवइ मंगलं ॥ १०१७ ॥

इदं गाथाचतुष्टयमप्यर्हन्नमस्कारवदवसेयं, विशेषतस्तु सुखोन्नेयम् ॥

एसो पंचनमुक्कारो, सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं, पढमं हवइ मंगलं ॥ १०१८ ॥

इयं गाथा पाठसिद्धा, तदेवमुक्तं वस्तुद्वारम् । अधुना निक्षेपद्वारप्रतिपादनार्थमाह—

नवि संखेवो न वित्थारो संखेवो दुविह सिद्ध—साहूणं । वित्थरओऽणेगविहो न जुज्जई पंचहा तम्हा ॥ १०१९ ॥

इह सूत्रं द्विधा—सङ्क्षेपवत् विस्तरवच्च, तत्र सङ्क्षेपवत् सामायिकसूत्रं, विस्तरवच्चतुर्दश पूर्वाणि, इदं पुनः 'नमो अरहंताण'-मित्यादि, नमस्कारसूत्रमुभयातीतम्, तथाहि—नायं सङ्क्षेपो नापि विस्तरः, अपिशब्दस्य व्यवहितः सम्बन्धः, तथाहि—'संखेवो

दुविह' इति, यद्ययं संक्षेपः स्यात् ततस्तस्मिन् सति द्विविध एव नमस्कारो भवेत्, सिद्धसाधुभ्यामिति, परिनिर्वृत्तार्हदादीनां
सिद्धशब्देन ग्रहणात् संसारिणां च साधुशब्देन, तथा च न ते संसारिणः सर्व एव साधुत्वमतिलङ्घ्य वर्त्तन्ते, तदभावे
शेषगुणानामसम्भवादिति, अथायं विस्तरस्तदप्यचारु, यतो विस्तरतोऽनेकविधः प्राप्नोति, तथा च ऋषभाजितसम्भवाभि-
नन्दनसुमतिपद्मप्रभसुपार्श्वचन्द्रप्रभेत्यादिमहावीरवर्द्धमानस्वामिपर्यन्तेभ्यः चतुर्विंशतयेऽर्हद्भ्यः, तथा सिद्धेभ्यो विस्तरे-
णानन्तरसिद्धेभ्यः परस्परसिद्धेभ्यः, अनन्तरसिद्धेभ्योऽपि तीर्थकरसिद्धेभ्योऽतीर्थकरसिद्धेभ्य इत्यादि, परम्परसिद्धेभ्योऽपि
प्रथमसमयसिद्धेभ्यो द्वितीयसमयसिद्धेभ्यो यावदनन्तसमयसिद्धेभ्यः, तथा तीर्थलिंगचारित्रप्रत्येकबुद्धादिविशेषणविशिष्टेभ्यः
तीर्थकरसिद्धेभ्यः अतीर्थकरसिद्धेभ्यः तीर्थसिद्धेभ्य इत्येवमनन्तशो विस्तरतः, यतश्चैवमतः पक्षद्वयमप्यङ्गीकृत्य पञ्चविधः—पञ्च-
प्रकारो न युज्यते नमस्कार इति, गतमाक्षेपद्वारम्। अधुना प्रसिद्धिद्वारमुच्यते, तत्र यत्तावदुक्तं 'न सङ्क्षेपत' इति तदयुक्तं,
सङ्क्षेपात्मकत्वात्, ननु स कारणवशात् कृतार्थाकृतार्थपरिग्रहेण सिद्धसाधुमात्र एवोक्तः, सत्यमुक्तः, अयुक्तस्त्वसौ, कारणा-
न्तरस्यापि भावात्, तथोक्तमेवानन्तरवस्तुद्वारे, अथवा वक्ष्यामः—'हेउ निमित्त' मित्यादिना, सति च द्वैविध्ये सकलगुण-
नमस्कारासम्भवात् एकपक्षस्य व्यभिचारित्वात्, तथा चाह—

अरिहंताई नियमा साहू साहू य तेसु भइयव्वा। तम्हा पंचविहो खलु हेउनिमित्तं हवइ सिद्धो ॥ १०२० ॥

अर्हदादयो नियमात् साधवः, साधुगुणानामपि तत्र सम्भवात्, साधवस्तु तेषु—अर्हदादिषु भक्तव्याः—विकल्पनीयाः,
यतस्ते साधवो न सर्वेऽर्हदादयः, किन्तु ?, केचिदर्हन्त एव केचित् केवलिनः केचिदाचार्याः सम्यक्सूत्रार्थविदः केचि-

दुपाध्यायाः सूत्रविद एव केचिदेतद्व्यतिरिक्ताः शिष्यकाः साधव एव, न अर्हदादय इति, तत्र एकपदव्यभिचाराच्च तुल्याभिधानतेति, न च साधुनमस्कारकरणेऽर्हदादिनमस्कारफलावाप्तिः, सामान्येन प्रवृत्तेः, तथा चात्र प्रयोगः–साधुमात्रनमस्कारो विशिष्टार्हदादिगुणनमस्कृतिफलप्रापणसमर्थो न भवति, तत्सामान्याभिधाननमस्कारवत्–मनुष्यत्वमात्रनमस्कारवत् जीवमात्रनमस्कारवद्वा, उक्तं च–"जइवि जइग्गहणातो होइ कहवि गहणमरिहयाईणं। तहवि न तग्गुणपूया जइगुणसामन्नपूयातो ॥१॥" तस्मात् पञ्चविध एव खलुशब्दस्यावधारणार्थत्वात् नमस्कारो भवति, व्यक्त्यपेक्षया विस्तरेण कर्त्तुमशक्यत्वात्, तथा हेतुनिमित्तं भवति सिद्धः पञ्चविधो नमस्कारः, तत्र हेतुर्नमस्कारार्हत्वे य उक्तः 'मग्गे अविप्पणासो' इत्यादिकः तन्निमित्तं–तस्मादुपाधिभेदात् भवति पञ्चविधः सिद्धः ॥ गतं प्रसिद्धिद्वारम्, अधुना क्रमद्वारप्रतिपादनार्थमाह—

पुव्वाणुपुव्वि न कमो नेव य पच्छाणुपुव्वि एस भवे। सिद्धाईआ पढमा बीआए साहुणो आई ॥ १०२१ ॥

इह क्रमस्तावद् द्विविधः–पूर्वानुपूर्वी पश्चानुपूर्वी च, अनानुपूर्वी तु क्रम एव न भवति, असमञ्जसत्वात्, तत्रायमर्हदादिक्रमः पूर्वानुपूर्वी न भवति, सिद्धाद्यनभिधानात्, एकान्तकृतकृत्यत्वेनार्हन्नमस्कार्यत्वेन च सिद्धा एव हि प्रधानं, प्रधानस्य चाभ्यर्हितत्वेन पूर्वमभिधानमिति भावार्थः, तथा नैव च पश्चानुपूर्वी एष क्रमो भवेत्, साध्वाद्यनभिधानात्, इह सर्वपाश्चात्याः अप्रधानत्वात् साधवः, ततश्च तानभिधाय यदि पर्यन्ते सिद्धाभिधानं स्यात् स्यात् तदा पश्चानुपूर्वीति, तथा चामुमेवार्थं प्रतिपादयति–सिद्धादिका प्रथमा पूर्वानुपूर्वी, भावना प्रतिपादितैव, द्वितीयायां तु–पश्चानुपूर्व्यां साधव आदौ, युक्तिरत्रापि प्रागभिहितैव, अत्र प्रतिविधीयते–पूर्वानुपूर्व्येव एष क्रमः, तथा च पूर्वानुपूर्वीत्वमेव प्रतिपादयन्नाह—

नमस्कारे क्रमः प्रयोजनफले

न य कोइवि परिसाए पणमित्ता पणमई रण्णो ॥ १०२२ ॥
अरिहंतुवएसेणं सिद्धा नज्जंति तेण अरिहाई ।

इह भगवदर्हदुपदेशेन—आगमेन सिद्धा ज्ञायन्ते—अवगम्यन्ते प्रत्यक्षादिगोचरातिक्रान्ताः संतो यतस्तेन अर्हदादिः, पूर्वानुपूर्वी क्रम इति गम्यते, अत एव चार्हतामभ्यर्हितत्वं, कृतकृत्यत्वं पुनरल्पकालव्यवहितत्वात् प्रायः समानमेव, अर्हन्नमस्कार्यत्वमप्यसाधनं, अर्हन्नमस्कारपूर्वकसिद्धत्वयोगेनार्हतामपि वस्तुतः सिद्धनमस्कार्यत्वात्, प्रधानत्वादिति भावना, आह—यद्येवमाचार्यादिस्तर्हि क्रमः प्राप्नोति, अर्हतामपि तदुपदेशेन संवेदनात्, उच्यते, इहार्हत्सिद्धयोरेवायं वस्तुतस्तुल्यबलयोर्विचारः श्रेयान्, परमनायकभूतत्वात्, आचार्यास्तु परिषत्कल्पा वर्त्तन्ते, नापि कश्चित्परिषदं प्रणम्य—प्रणामं कृत्वा पश्चात् प्रणमति राज्ञः पदानित्यतः अचोद्यमेतत् ॥ उक्तं क्रमद्वारम्, अधुना प्रयोजनफलप्रदर्शनार्थमाह—

इत्थ य पओअणमिणं कम्मखओ मंगलागमो चेव । इहलोअ—पारलोइअ दुविहफलं तत्थ दिट्ठंता ॥ १०२३ ॥

अत्र च—नमस्कारकरणे प्रयोजनमिदम्, यदुत करणकाल एवाक्षेपेण कर्मक्षयो—ज्ञानावरणीयादिकर्म्मापगमः अनन्तपुद्गलापगममन्तरेण भावतो नकारमात्रस्याप्यप्राप्तेः, तथा मङ्गलागमश्चैव करणकालभावीति, तथा कालान्तरभावि पुनरिह लौकिकपारलौकिकभेदभिन्नं द्विविधं—द्विप्रकारं फलं, तत्र च दृष्टान्ता वक्ष्यमाणलक्षणाः ॥

इहलोएँ अत्थकामा आरोग्गं अभिरई य निप्फत्ती । सिद्धी य सग्गसुकुले पच्चायाई य परलोए ॥ १०२४ ॥

इहलोके अर्थकामौ भवतः, तथा आरोग्यं—नीरुजत्वं भवति, एतेऽर्थादयः शुभविपाकिनोऽस्य भवन्ति, तथा चाहअभिरतिश्च भवति, आभिमुख्येन रतिरभिरतिः, इहलोके अर्थादिभ्यो भवति, परलोके च तेभ्य एव शुभानुबन्धित्वा-

॥५५२॥

न्निष्पत्तिः, पुण्यस्येति गम्यते, अथवाऽभिस्तैश्च निष्पत्तिरित्येकवाक्यतैव, तथा सिद्धिश्च–मुक्तिश्च, तथा स्वर्गः सुकुलप्रत्या-
यातिश्च परलोके इति–पारलौकिकं फलम् ॥ इह च सिद्धिश्चेत्यादिकः क्रमः प्रधानफलापेक्षी उपायख्यापनपरश्च, तथाहि–
विरला एवैकभवसिद्धिमासादयन्ति, अनासादयन्तश्चाविराधकाः स्वर्गसुकुलोत्पत्तिमन्तरेण नावस्थानान्तरमनुभवन्तीति ॥
सम्प्रति यथाक्रममेवार्थादीनधिकृत्योदाहरणानि प्रतिपादयति—

**इहलोगम्मि तिदंडी १ सादिव्वं २ माउलिंगवणमेव ३। परलोइ चंडपिंगल ४ हुंडिअजक्खो ५ य दिट्ठंता ॥ १०२९ ॥**

इहलोके नमस्कारात् फलसम्पत्तौ, अत्रोदाहरणम्–त्रिदंडी, एगस्स सावगस्स पुत्तो धम्मं न लएइ, सो य सावगो काल-गतो, सो वियाररहितो एवं चेव विहरइ, अन्नया तेसिं घरसमीवे परिव्वायगो आवासितो, सो तेण समं मित्तिं करेइ, अन्नया भणइ–आणेहि निरुवहयं अणाहमडयं जेण ते ईसरियं करेमि, तेण मग्गियं, लद्धो ओवद्धतो मणुस्सो, सो मसाणं नीतो, जं च तत्थ पाउग्गं तं च नीयं, सो य दारगो पियरेण नमोक्कारं सिक्खावितो, भणितो य–जाहे बीहेज्जासि ताहे एयं पढे-ज्जासि, विज्जा एसा, सो य तस्स मयगस्स पुरतो ठवितो, तस्स मयगस्स हत्थे असी दिन्नो, परिव्वायगो विज्जं परियत्तेइ, उट्ठेउमारद्धो वेयालो, सो दारगो भीतो, हियएण नमोक्कारं परियत्तेइ, सो वेयालो पडितो, पुणोवि जवइ, पुणोवि उट्ठवितो, सुट्ठुतरागं परियट्टेइ, पुणोवि पडितो, तिदंडी भणइ–किंचि जाणसि ?, भणइ–किंपि न जाणामि, पुणोवि जवइ तइय-वारं, पुणो नमोक्कारं परियत्तेइ, ताहे वाणमंतरेण रुसिऊण तं खग्गं गहाय सो तिदंडी दो खंडीकतो, सुवण्णखोडी जाता,

अंगोवगाणि य से जुयजुयाइं काउं सवरत्तिं छूढो, ईसरो नमोकारपभावेण जातो, जइ न होंतो नमोकारो तो वेयालेण मारिज्जंतो, सो सुवण्णं होंतो १ ॥

कामनिप्फत्ती नमोकारातो, कहं ?, एगा साविगा, तीसे भत्ता मिच्छादिट्ठी, अण्णं भज्जं आणेउं मग्गेइ, तीसे तणएण न लहइ, ससवत्तगंति, चिंतेइ-किह मारेमि ?, अण्णया कण्हसप्पो घडए छुभित्ता आणितो, संगोवितो, जिमितो, भणइ-आणेह पुप्फाणि अमुगे घडए ठवियाणि, सा पविट्ठा, अंधकारंति नमोकारं चिंतेइ, जइवि मे कोइ खाएज्जा तोवि मे मरंतीए नमोकारो न नस्सिहितीति, छूढो हत्थो, सप्पो देवयाए अवहितो, पुप्फमाला कया, सा गहिया दिण्णा य से, सो संभंतो चिंतेइ-अण्णाणि एयाणि पुप्फाणि, पुच्छइ य, तीए कहियं-ततो चेव घडातो आणीयाणि, गतो तत्थ, पेच्छइ घडगं पुप्फगंधं च, नवि तत्थ कोइ सप्पो, ततो आउट्टो पायवडितो सव्वं कहेइ, खामेइ य, पच्छा सा चेव घरसामिणी जाया, एवं कामावहो नमोकारो २ ॥

आरोग्गाभिरईए उदाहरणं-एगं नगरं नदीए तीरे, खरकम्मिएण सरीरचिंतानिग्गतेणं नदीए वुज्झंतं माउलिंगं दिट्ठं, रायाए उवणीयं, सूयस्स हत्थे दिण्णं, तेण जिमियस्स उवणीयं, पमाणेण अइरित्तं, गंधेण वण्णेण य, तस्स मणूसस्स राया तुट्ठो, दिण्णा भोगा, राया भणइ-अणुनदीए मग्गह, पत्थयणं गहाय पुरिसा गया, दिट्ठो वणसंडो, जो फलाणि गेण्हइ सो मरइ, रण्णो कहियं, भणइ-अवस्सं आणेयव्वाणि, गोलगपडिया वच्चंतु, एवं गया आणेंति, तत्थ जस्स सो गोलगो आगतो सो एगो वणे पविसइ, पविसित्ता फलाणि बाहिं छुभइ, ततो आणेंति, जो छुहइ सो मरइ, एवं वच्चंते काले साव-

गस्स परिवाडी जाया, तत्थ गतो चिंतेइ—इमो विराहियसामन्नो कोवि होज्जत्ति निसीहियं भणित्ता नमोकारं पढंतो ढुक्कइ, वाणमंतरस्स चिंता जाया—कत्थ मण्णे एयं सुयपुव्वं ?, णायं, संबुद्धो, वंदइ, भणइ—अहं तत्थेव आहरामि, गतो, रण्णो कहियं, रण्णा सम्माणितो, तस्स ओसीसए दिणे २ ठवेइ, एवं तेण अभिरई भोगा य लद्धा, जीवियातो य किं अन्नं आरोग्गं ?, रायावि परितुट्ठोत्ति ३ ॥

परलोगेवि नमोक्कारफलं—वसंतपुरे नयरे जियसत्तू राया, तस्स गणिया साविया, सा चंडपिंगलेण समं वसति, अन्नया कयाइ तेण रन्नो घरं हयं, हारो नीणितो, भीएहिं संगोविज्जइ, अण्णया उज्जाणियाए गमणं, सव्वातो विभूसियातो गणियातो वच्चंति, तीए सव्वातो अतिसयामित्ति सो हारो आविद्धो, जीसे देवीए सो हारो तीसे दासीए सो नातो, कहियं रन्नो, सा केण समं वसइ ?, कहिए चंडपिंगलो गहितो, सूले भिन्नो, एतीएवि चिंतियं—मम दोसेण मारिउत्ति, सा से नमोकारं देइ, भणइ य—निदाणं करेहि जहा—एयस्स रण्णो पुत्तो आयामित्ति, कयं निदाणं, अग्गमहिसीए उदरे उववन्नो, दारगो जातो, सा साविया कीलावणधाती जाया, अण्णया चिंतेइ—कालो समो गब्भस्स मरणस्स य, होज्जा कयाइ, रमावेंती भणइ—मा रोव चंडपिंगला इति, जाई सरिया, संबुद्धो, राया मतो, सो राया जातो, सुचिरेण कालेण दोवि पव्वइयाणि, एवं सुकुलपच्चायाती तंमूलागं च सिद्धिगमणमिति ॥ अहवा बिइयं उदाहरणं—महुराए नयरीए जिणदत्तो सावगो, तत्थ हुंडितो चोरो, नगरं परिमुसइ, सो कयाइ गहियो, सूले भिन्नो, रण्णा भणियं—पडियरह बिइज्जयावि से नज्जिहिंति, ततो रायमणूसा पडिचरंति, सो जिणदत्तो सावगो तस्स नाइदूरेण वीतीवयइ, सो चोरो भणइ—सावग ! तुममणुकंपगोऽसि, तिसाइतोऽहं, देहि

मम पाणियं जा मरामि, सावगो भणइ–इमं नमोक्कारं पढ, जा ते आणेमि पाणियं, जइ वीसारेहिसि तो ते आणीयंपि न देमि, सो ताए लोलयाए पढइ, सावगोवि पाणियं गहाय आगतो, एतं वेलं पाहामोत्ति, णमोक्कारं घोसंतस्स विणिग्गतो जीवो, जक्खो उववन्नो, सावगो तेहिं मणूसेहिं गहितो चोरभत्तदायगोत्ति, रण्णो निवेइयं, भणइ–एयंपि सूले भिंदह, आघायणं निज्जइ, जक्खो ओहिं पउंजइ, पेच्छइ सावगं, अप्पणो य सरीरं, ततो पत्थ(व)यं उप्पाडिऊण नयरस्स उवरिं ठवइ, भणइ य–सावयं न याणह?, खामेह, मा भे अन्नहा सव्वे चूरामि, ततो मुक्को खामितो, विभूईए नयरं पवेसितो, नयरस्स पुव्वेण जक्खस्स आययणं कयं, एवं नमोक्कारेण फलं लब्भइ ॥ उक्ता नमस्कारनिर्युक्तिः ॥ सम्प्रति सूत्रोपन्यासार्थः, प्रत्यासत्तियोगतः परमार्थेन सूत्रस्पर्शिकनिर्युक्तिगतामेव गाथामाह—

सूत्रारंभकालः

नंदिमणुओगदारं विहिवदुवग्घाइअं च नाऊणं । काऊण पंचमंगलमारंभो होइ सुत्तस्स ॥ १०२६ ॥

नन्दिश्चानुयोगद्वाराणि च नन्द्यनुयोगद्वारं, समाहारत्वादेकवचनं, विधिवत्–यथावत् यथाविधि उपोद्घातं च 'उद्देसे निद्देसे य' इत्यादिलक्षणं ज्ञात्वा–विज्ञाय, पाठान्तरं भणित्वा, तथा कृत्वा पञ्च मङ्गलानि, नमस्कारमित्यर्थः, किं ?, आरम्भो भवति सूत्रस्य, इह पुनर्नन्द्याद्युपन्यासः किल विधिनियमख्यापनार्थः, नन्द्यादि ज्ञात्वैव भणित्वैव वा सूत्रस्यारम्भो भवति, नान्यथेति, तथा उपोद्घातः सकलप्रवचनसाधारणत्वेन प्रधानः, प्रधानस्य च सामान्यग्रहणेऽपि भेदोपन्यासो भवति, यथा ब्राह्मणा आयाता वशिष्ठोऽप्यायात इति अनुयोगद्वारग्रहणेन तस्य ग्रहणेऽपि पृथगुपन्यासः ॥ सम्बन्धान्तरप्रतिपादनायैवाह—

कयपंचनमोक्कारो करेइ सामाइयंति सोऽभिहितो । सामाइयंगमेव य जं सो सेसं अतो वोच्छं ॥ १०२७ ॥ यस्मादसौ

कृतः पञ्चनमस्कारो येन स तथाविधः, शिष्यः सामायिकं करोतीत्यागमः, स च पञ्चनमस्कारोऽभिहितो यस्मादसौ नमस्कारः सामायिकाङ्गमेव, सा च सामायिकाङ्गता प्रागेवोक्ता, अत ऊर्ध्वं शेषं सूत्रं वक्ष्ये ॥ तच्चेदं—

करेमि भंते! सामाइयं सव्वं सावज्जं जोगं पच्चक्खामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि, तस्स भंते! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ॥ १ ॥ (सूत्रं)

इदं च सूत्रं सूत्रानुगम एव प्राप्तावसरेऽहीनाक्षरादिगुणोपेतमुच्चारणीयम्, तद्यथा—अहीनाक्षरमनत्यक्षरं अव्याविद्धाक्षरमस्खलितममिलितमव्यत्याम्रेडितं प्रतिपूर्णं प्रतिपूर्णघोषं कण्ठोष्ठविप्रमुक्तं वाचनोपगत'मिति, अमूनि च पदानि प्राग् व्याख्यातत्वात् न व्याख्यायन्ते, एवंरूपे च सूत्रे उच्चरिते सति केषाञ्चिद्भगवतां साधूनां केचन अर्थाधिकारा अधिगता भवंति, केचन त्वनधिगताः, ततश्चानधिगताधिगमनाय व्याख्या प्रवर्त्तते, तल्लक्षणं चेदम्—संहिता च पदं चैव, पदार्थः पदविग्रहः । चालना प्रत्यवस्थानं, व्याख्या तंत्रस्य षड्विधा ॥ १ ॥ अस्खलितपदोच्चारणं संहिता, अथवा परः सन्निकर्षः संहिता, यथा—करेमि भंते! सामाइयमित्यादि, जाव वोसिरामित्ति, पदं च पञ्चधा, तद्यथा—नामिकं नैपातिकं औपसर्गिकमाख्यातिकं मिश्रं च, तत्र अश्व इति नामिकं, खल्विति नैपातिकं, परीत्यौपसर्गिकं, धावतीत्याख्यातिकं, संयत इति मिश्रं, अथवा द्विविधं पदं—स्याद्यन्तं पदं तिबाद्यंतं च, अत्र पञ्चविधानि द्विविधानि वा पदानि, तद्यथा—करोमि भयान्त!

त्रिविधं त्रिविधेन मनसा वाचा कायेन न करोमि न कारयामि
सामायिकं सर्वं सावद्यं योगं प्रत्याख्यामि यावज्जीवया आत्मानमुत्सृजामीति पदानि। अधुना पदार्थः,
कुर्वन्तमपि अन्यं न समनुजाने, तस्य भयान्त! प्रतिक्रामामि निन्दामि गर्हे तत्र कारकविषयो यथा पचतीति
स च चतुर्विधः, तद्यथा—कारकविषयः समासविषयः तद्धितविषयो निरुक्तिविषयश्च, निरुक्तिविषयो यथा
पाचकः, समासविषयो यथा राज्ञः पुरुषः राजपुरुषः, तद्धितविषयो यथा वसुदेवस्यापत्यं वासुदेवः, उकारे गुणे च कृते करो-
भ्रमति च रौति च भ्रमरः, अत्रापि 'डुकृञ् करणे' इत्यस्य मिप्रत्ययान्तस्य 'कृञ्तनादेरु' रिति भयं—प्रतीतं
मीति भवति, अभ्युपगमश्चास्यार्थः, एवं प्रकृतिप्रत्ययविभागः सर्वो वक्तव्यः, इह तु ग्रन्थगौरवभयान्नोच्यते, तस्य सम्बोधनं भयं-
वक्ष्यामश्चोपरिष्टात्, अन्तो—विनाशः, भयस्यान्तो भयान्तः, अयमेव पदविग्रहः, पदपृथक्करणं पदविग्रहः, स सावद्यः तं, सपा-
न्तेति, सामायिकपदार्थः पूर्ववत्, सर्वमित्यपरिशेषवाची शब्दः, अवद्यं—पापं, सहावद्येन यस्य येन वा ततः प्रत्याख्यामीति कि-
पमित्यर्थः, योगो—व्यापारस्तं, प्रत्याख्यामि, प्रतिशब्दः प्रतिषेधे, आङ् आभिमुख्ये, ख्या प्रकथने, इति शब्दसंस्कारः,
मुक्तं भवति ?,—सावद्ययोगस्य प्रतीपमभिमुखं ख्यापनं करोमि इति, अथवा पच्चक्खामीति प्रत्याचक्षे यावज्जीवयेत्यत्र
'चक्ष व्यक्तायां वाचि' अस्य प्रत्याङ्पूर्वस्य प्रयोगः, प्रत्याचक्षे इति कोऽर्थः ?—प्रतिषेधस्यादरेणाभिधानं करोमि, मर्यादायां यावज्जी-
यावच्छब्दः परिमाणमर्यादाऽवधारणवचनः, तत्र परिमाणे यावन्मम जीवनपरिमाणं तावत्प्रत्याख्यामीति, न तस्मात्
वनमिति मरणं मर्यादीकृत्य आरात्, न मरणकालमात्र एवेति, अवधारणे यावत् जीवनमेव तावत् प्रत्याख्यामि, यावज्जीवो यस्यां सा
परत इत्यर्थः, जीवनं जीवेत्ययं क्रियाशब्दः परिगृह्यते, तया, अथवा प्रत्याख्यानक्रिया परिगृह्यते,

यावज्जीवं तया, त्रिविधमिति तिस्रो विधा यस्य सावद्ययोगस्य स त्रिविधः, स च प्रत्याख्येयत्वेन कर्म्म सम्पद्यते, कर्म्मणि च द्वितीया विभक्तिः, अतस्तं त्रिविधं मनोवाक्कायव्यापारलक्षणं कायवाङ्मनःकर्म्म योग' ( तत्त्वा अ. ६ सू. १ ) इति वचनात्, 'त्रिविधेने'ति करणे तृतीया, मनसा वाचा कायेन, तत्र 'बुधी मनी ज्ञाने' मननं मन्यते वाऽनेनेति मनः, औणादिकोऽसुप्रत्ययः, तच्चतुर्द्धा, नामस्थापनाद्रव्यभावभेदात्, नामस्थापने सुगमे, द्रव्यमनो ज्ञशरीरभव्यशरीरव्यतिरिक्तं तद्योग्यपुद्गलमयं, भावमनो मंता जीव एव, 'वच परिभाषणे' वचनं उच्यते इति वाक्, सापि चतुर्विधा नामस्थापनाद्रव्यभावभेदात्, तत्र नामस्थापने सुगमे, द्रव्यवाक् ज्ञशरीरभव्यशरीरव्यतिरिक्ता शब्दपरिणामयोग्याः जीवपरिगृहीताः १ भाववाक् पुनस्त एव पुद्गलाः शब्दपरिणाममापन्नाः, तथा 'चिञ् चयने' चयनं चीयते वा कायः 'चित्युपसमाधानावसथदेहे कश्चादि' रिति घञ्, चकारात् ककारः, पुद्गलानां चयात् पुद्गलानामेवावयवरूपतया समाधानात् जीवस्य निवासात् प्रतिक्षणं केषाञ्चित्पुद्गलानां क्षरणात् कायः–शरीरं, सोऽपि नामस्थापनाद्रव्यभावभेदाच्चतुर्धा, तत्र नामस्थापने प्रतीते, द्रव्यकायो ज्ञशरीरभव्यशरीरव्यतिरिक्तः शरीरत्वयोग्या अगृहीतास्तत्स्वामिना वा जीवेन मुक्ता यावत् तं परिणामं न मुञ्चंति तावद् द्रव्यकायः, भावकायस्तु तत्परिणामपरिणता जीवबद्धा जीवसंयुक्ताश्च पुद्गलाः, अनेन त्रिविधेन करणेन त्रिविधं पूर्वाधिकृतं सावद्यं योगं न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि–न अनुमन्येऽहमिति, तस्येत्यधिकृतस्य सावद्ययोगस्य ( भयान्त इति पूर्ववत् ) प्रतिक्रमामि–निवर्त्ते निन्दामि–जुगुप्से, गर्हे इति स एवार्थः, किन्तु आत्मसाक्षिकी निन्दा गुरुसाक्षिकी गर्हेति, किं जुगुप्से इत्यत आह–आत्मानम्–अतीतसावद्ययोगकारिणं, व्युत्सृजामि–वि-

विधार्थो विशेषार्थो वा विशब्दः, उच्छब्दो भृशार्थः, त्यजामि—त्यजामि, विविधं विशेषेण भृशं त्यजामीति भावः, एवं तावत्पदार्थपदविग्रहौ यथासम्भवमुक्तौ, अधुना चालनाप्रत्यवस्थाने वक्तव्ये, अत्रान्तरे सूत्रस्पर्शिकनिर्युक्तिरुच्यते, स्वस्थानत्वात्, आह च निर्युक्तिकारः—

अक्खलिअसंहिआई वक्खाणचउक्कए दरिसिअम्मि । सुत्तप्फासिअनिज्जुत्ति—वित्थरत्थो इमो होइ ॥ १०२८ ॥

अस्खलिते— अस्खलितादौ सूत्रे उच्चरिते संहितादौ व्याख्यानचतुष्टये दर्शिते सति सूत्रस्पर्शिकनिर्युक्तिविस्तरार्थोऽयं भवतीति ॥ तमेव दर्शयति—

करणे भए अ अंते सामाइअ सवए अवज्जे अ । जोगे पच्चक्खाणे जावज्जीवाइ तिविहेणं ॥ १०२९ ॥

'करणे' करणशब्दे, एवं भयशब्दे अन्तशब्दे सामायिकशब्दे सर्वशब्देऽवद्यशब्दे योगशब्दे प्रत्याख्यानशब्दे यावज्जीवशब्दे त्रिविधेनेतिशब्दे च सूत्रस्पर्शिकनिर्युक्तिर्भवति, सा च सूत्रस्पर्शिकनिर्युक्तिरनुगमरूपा सूत्रालापकन्यासपूर्वकेति प्रथमतः करणनिक्षेपदर्शनायाह—

नामंठवणादविए खित्ते काले तहेव भावे अ । एसो खलु करणस्स उ निक्खेवो छव्विहो होइ ॥ १५२ ॥ (भा.)

'नामे'ति नामकरणं स्थापनाकरणं द्रव्यकरणं क्षेत्रकरणं कालकरणं भावकरणं च एषः—एवंस्वरूपः खलु करणस्य निक्षेपः षड्विधो भवति ॥ तत्र नामस्थापने क्षुण्णे, सम्प्रति द्रव्यकरणप्रतिपादनायाह—

जाणगभविअइरित्तं सन्नानोसन्नओ भवे करणं । सन्ना कडकरणाई नोसन्ना वीसस—पओगे ॥ १५३ ॥ (भा.)

इह यथासम्भवं द्रव्यकरणशब्दस्य व्युत्पत्तिः—द्रव्यस्य द्रव्येण द्रव्ये वा करणं द्रव्यकरणमिति, द्रव्यकरणं द्विधा—आगमतो नोआगमतश्च, आगमतः करणशब्दार्थज्ञाता तत्र चानुपयुक्तो, नोआगमतस्त्रिधा—ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात्, तत्र ज्ञशरीरभव्यशरीरे प्रतीते, ज्ञभव्यातिरिक्तं—ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्विधा—'सन्नानोसन्नओ भवे करण'मिति, संज्ञाकरणं नोसंज्ञाकरणं च, तत्र संज्ञाकरणं कटकरणादिं, आदिशब्दात् पेलुकरणादिपरिग्रहः, पेलुशब्देन रुतपूणिका अभिधीयते, अयमत्र भावार्थः—कटनिर्वर्त्तकमयोमयं चित्रसंस्थानं पाइल्लकादि तथा रुतपूणिकानिर्वर्त्तकं शलाकाशल्यकाङ्गरुहादि संज्ञाद्रव्यकरणम्, अन्वर्थोपपत्तेः संज्ञाविशिष्टं द्रव्यस्य करणं संज्ञाद्रव्यकरणं, आह—इदं नामकरणमेव पर्यायमात्रतः संज्ञाकरणम्, अतो न कश्चिद्विशेषः, तदयुक्तं, नामकरणमिहाभिधानमात्रं करणमित्यक्षरत्रयात्मकं परिगृह्यते, संज्ञाकरणं तु करणादिसंज्ञाविशिष्टं कटादेर्निर्वर्त्तनाय करणं ततो महान् विशेषः, आह च भाष्यकारः—सन्नानामंति मई तन्नो नामं जमभिहाणं ॥ जं वा तदत्थविकले कीरइ दवं तु दवणपरिणामं । पेलुकरणादि न हि तं, तदत्थसुन्नं नवा सद्दो ॥ १ ॥ जइ न तदत्थविहीणं, तो किं दवकरणं जतो तेणं । दवं कीरइ सन्नाकरणंतिय करणरूढीतो ॥ २ ॥ आसामक्षरतृतीयगाथानामयं सङ्क्षेपार्थः—ननु संज्ञा नामेत्यनर्थान्तरं, ततः संज्ञाकरणनामकरणयोर्न कश्चिद्विशेषः, तदेतन्न, यस्मात् करणमित्यक्षरत्रयात्मकमभिधानमात्रं नाम, यद्वा तदर्थविकले वस्तुनि सङ्केतमात्रतः करणमिति नाम क्रियते तन्नामकरणं, संज्ञाकरणं तु पेलुकरणादिकं द्रव्यं तेन तेन पूणिकादिकृतिसाधकतमरूपेण यद् द्रविणं तत्र द्रवणपरिणामं, नहि तत् पेलुकरणादि तदर्थविहीनं, पूणिकादिकृतिसाधकतमपरिणामान्वितत्वात्, नापि शब्दः करणमित्यक्षरत्रयात्मकं, ततो महान्

नामकरणसंज्ञाकरणयोर्भेदः, ननु यदि न संज्ञाकरणं तदर्थविहीनं—करणशब्दार्थरहितं ततः किं—कस्माद् द्रव्यकरणं ?, करणमित्युच्यते, उच्यते, यतस्तेन पेलुकरणादिना पूणिकादिद्रव्यं क्रियते तेन करणमित्युच्यते, करणभावकरणं हि तत्प्राप्नोतीति भावः, उच्यते, यतस्तेन पेलुकरणादिना पूणिकादिद्रव्यं क्रियते तेन करणमिति संज्ञा च तत्र रूढेति संज्ञाद्रव्यकरणमिति । नोसंज्ञाद्रव्यकरणं द्विधा—प्रयोगतो विस्रसातश्च, तथा चाह—'वीससपयोगे' । तत्र विश्रसाकरणं द्विधा—साद्यनादिभेदात्, तदाह—

वीससकरणमणाई धम्माईणं परपच्चया जोगा । साई चक्खुप्फासिय—मब्भाइ अचक्खुमणुमाइ ॥१५४॥ (भा.)

विश्रसा—स्वभावो भण्यते तेन करणं विश्रसाकरणम्, करणशब्दस्य च कृतिः करणं क्रियते तदिति करणं क्रियते अनेन वा करणमिति यथायोगं व्युत्पत्तिरवसतव्या । अत्र तु भावसाधनः, अनादि—आदिरहितं धर्मादीनां—धर्माधर्माकाशास्तिकायानां, अन्योऽन्यसमाधानमिति गम्यते, आह—करणशब्दस्तावदपूर्वप्रादुर्भावे वर्त्तते, करणं चानादि चेति परस्परविरुद्धं, उच्यते, न खल्ववश्यमपूर्वप्रादुर्भाव एव करणशब्दो वर्त्तते, किं तु अन्योऽन्यसमाधानेऽपि, तथा पूर्वाचार्योपदेशतो न कश्चिद्दोषः, अथवा परप्रत्यययोगादिति—परवस्तुप्रत्ययात्—सहकारिवस्तुयोगात् धर्मास्तिकायादीनां या विश्रसातः तथा योग्यता सा करणं, एवमप्यनादिता विरुद्ध्यते इति चेत्, नैष दोषः, अनन्तशक्तिप्रचितद्रव्यपर्यायोभयरूपत्वे सति वस्तुनो द्रव्यादेशेनाविरोधात्, गहनमेतत् सूक्ष्मधिया भावनीयम्, अथवा विश्रसाकरणं धर्मादीनां परस्परसमाधानरूपं करणमनादि, यत् पुनः परप्रत्यययोगतस्तत्तत्पर्यायभवनं, देवदत्तादिसंयोगतो ये धर्मादीनां विशिष्टाः पर्याया इत्यर्थः, तत् सादिकरणं ॥ एवमरूपिद्रव्याण्यधिकृत्य साद्यनादिविश्रसाकरणमुक्तम् ॥ अधुना रूपिद्रव्याण्यधिकृत्य साद्येव वा चाक्षु-

पेतरभेदेन करणमाह–सादि चक्षुःस्पर्शं, चाक्षुपमित्यर्थः, अभ्रादि, आदिशब्दात् शक्रचापादिपरिग्रहः, 'अचक्खुए'त्ति अचाक्षुषं–अण्वादि, आदिशब्दाद् द्व्यणुकादिपरिग्रहः, करणता चेह कृतिः करणमितिकृत्वा, अन्यथा वा स्वबुद्ध्या योजनीया ॥ सम्प्रति चाक्षुषाचाक्षुषभेदमेव विशेषेण प्रतिपादयति—

संघाय–भेअ–तदुभयकरणं इंदाउहाइ पच्चक्खं । दुअअणुमाईयाणं छउमत्थाईणऽपच्चक्खं ॥ १५५ ॥ (भा.)

संघातः संहननं, भेदो विघटनं, तच्छब्देन सङ्घातभेदौ परामृश्येते, तच्च तत् उभयं च तदुभयं, सङ्घातभेदतदुभयैः करणं, क्रियते इति कर्म्मसाधनः करणशब्दः, सङ्घातभेदतदुभयकरणं इन्द्रायुधादि स्थूलमनन्तपुद्गलात्मकं प्रत्यक्षं, चाक्षुषमित्यर्थः, तथाहि–अभ्रादीनां कचित् केचित् पुद्गलाः संहन्यंते एव कचित् केचित् भिद्यन्त एव कचित् केचित् संहन्यन्ते भिद्यन्ते चेति सङ्घातभेदतदुभयकरणं, द्व्यणुकादीनां आदिशब्दात् तथाविधानन्ताणुकान्तानां पुनः, करणमिति वर्त्तते, छद्मस्थादीनां आदिशब्दः स्वगतानेकभेदप्रतिपादनार्थमाह, अप्रत्यक्षम्, अचाक्षुषमित्यर्थः, उक्तं विस्रसाकरणम्, अधुना प्रयोगकरणं वक्तव्यम्, तत्र प्रयोगो नाम जीवव्यापारः तेन यद् विनिर्माप्यते सजीवमजीवं वा तत् प्रयोगकरणं, उक्तं च–"होइ पयोगो जीववावारो तेण जं विणिम्मायं । सजीवमजीवं वा पयोगकरणं तयं वहुहा ॥ १ ॥" एतदेवाह—

जीवमजीवे पाओगिअं तु चरिमं कुसुंभरागाई । जीवप्पओगकरणं मूले तह उत्तरगुणे अ ॥ १५६ ॥ (भा.)

प्रायोगिकं करणं द्विधा–जीवे अजीवे च, जीवप्रायोगिकमजीवप्रायोगिकं चेत्यर्थः, प्रयोगेण निर्वृत्तं प्रायोगिकं, तत्र चरमम्–अजीवप्रयोगकरणं कुसुंभरागादि, आदिशब्दात् शेषवर्णादिपरिग्रहः, एवं तावदल्पवक्तव्यत्वादभिहितं ओघतोऽजीव-

प्रयोगकरणं, जीवप्रयोगकरणं द्विप्रकारं, मूले–मूलगुणकरणं तथा उत्तरगुणे चेति–उत्तरगुणकरणं, व्यासार्थं तु ग्रन्थकार एव वक्ष्यति, तत्राल्पवक्तव्यत्वादजीवप्रयोगकरणमादावेवाभिधित्सुराह—

जं जं निज्जीवाण कीरइ जीवप्पओगओ तं तं । वन्नाइ रूवकम्माइ वावि अज्जीवकरणं तु ॥ १५७ ॥ (भा.)

यत् यत् निर्जीवानां पदार्थानां जीवप्रयोगेण क्रियते–निर्वर्त्यते तत्तद्वर्णादि कुसुम्भादीनां रूपकर्म्मादि कुट्टिमादौ अजीवे अजीवविषयत्वाद् अजीवप्रयोगकरणमिति ॥

जीवप्पओगकरणं दुविहं मूलप्पओगकरणं च । उत्तरपओगकरणं पंच सरीराइं पढमम्मि ॥ १५८ ॥ (भा.)

ओरालिआइआइं ओहेणिअरं पओगओ जमिह । निप्फन्ना निप्फज्जइ आइल्लाणं च तं तिण्हं ॥ १५९ ॥ (भा.)

औदारिकादीनि, आदिशब्दात् वैक्रियाहारकतैजसकार्म्मणशरीरपरिग्रहः, ओघेन–सामान्येन तथा इतरत्–उत्तरप्रयोगकरणं गृह्यते, तल्लक्षणं चेदम्–प्रयोगेण यदिह लोके मूलप्रयोगेण निष्पन्नात् तन्निष्पन्नात् निष्पद्यते तदुत्तरप्रयोगकरणं, तच्च त्रयाणामाद्यानां शरीराणाम्, इयमत्र भावना–पञ्चानामौदारिकादिशरीराणामाद्यं सङ्घातकरणं मूलप्रयोगकरणमुच्यते, अङ्गोपाङ्गादिकरणं तूत्तरकरणं, तच्चौदारिकवैक्रियाहारकरूपाणां त्रयाणां शरीराणां, न तु तैजसकार्म्मणयोः, तयोरङ्गोपाङ्गाद्यसम्भवात्, तत्रौदारिकादीनामष्टावङ्गानि, अङ्गुल्यादीनि उपाङ्गानि, शेषाणि अङ्गोपाङ्गानि मूलकरणं, तानि चामूनि—

सीसमुरोअरपिट्ठी दो बाहू ऊरुआ य अट्ठंगा । अंगुलिमाइ उवंगा अंगोवंगाइं सेसाइं ॥ १६० ॥ (भा.)

शीर्षमुर उदरं पृष्ठं द्वौ बाहू द्वौ च ऊरू इत्यष्टावङ्गानि, अङ्गुल्यादीनि उपाङ्गानि, शेषाणि करपादादीनि अङ्गोपाङ्गानि ॥ किञ्च—

केसाईउवरयणं उरालविउवि उत्तरं करणं। ओरालिए विसेसो कण्णाइणट्ठसंठवणं ॥ १६१ ॥ (भा.)

केशाद्युपरचनं—केशादिनिर्मापणसंस्कारौ आदिशब्दान्नखदन्तरागादिपरिग्रहः, औदारिकवैक्रिययोरुत्तरकरणं, यथासम्भवं चेह योजना कार्या, तथा औदारिके उत्तरकरणे विशेषः, कर्णादिविनष्टसंस्थापनं, न चेदमुत्तरकरणं वैक्रियादौ सम्भवति, विनाशाभावात्, विनष्टस्य च सर्वथा विनाशेन संस्थापनाऽभावात्, केशाद्युपरचनरूपं तूत्तरकरणमाहारके न सम्भवति, प्रयोजनाभावात्, ततो गमनागमनादिरूपं तत्तत्रावसातव्यम्, अथवेदमन्यादृक् त्रिविधं करणम्, तद्यथा—सङ्घातकरणं परिशाटकरणं सङ्घातपरिशाटकरणं च, तत्राद्यानां त्रयाणां शरीराणां तैजसकार्म्मणरहितानां त्रिविधमप्यस्ति, द्वयोस्तु चरमद्वयमेव ॥ तथा चाह—

तेआकम्मे संघायसाडणं साडणा वाऽवि ॥ १६२ ॥ (भा.)

आइल्लाणं तिण्हं संघाओ साडणं तदुभयं च।

आद्यानां त्रयाणाम्—औदारिकवैक्रियाहारकरूपाणां शरीराणां सङ्घातः शाटनं तदुभयं च—सङ्घातपरिशाटौ, तैजसकार्मणे च सङ्घातपरिशाटौ शाटनं वापि, न तु सङ्घातोऽनादित्वात् ॥ साम्प्रतमौदारिकमधिकृत्य सङ्घातादिकालमानमभिधित्सुराह—

संघायमेगसमयं तहेव परिसाडणं उरालम्मि। संघायणपरिसाडो खुड्डागभवं तिसमऊणं ॥ १६३ ॥ (भा.)

सङ्घातमिति सर्वसङ्घातकरणमेकसमयं भवति, एकान्तादानस्य एकसामयिकत्वात्, अत्र घृतपूपो दृष्टान्तः, यथा घृतपूर्ण-

प्रतप्तायां तापिकायां सम्पानकप्रक्षेपात् स पूपः प्रथमसमये एव एकान्तेन स्नेहपुद्गलानां ग्रहणमेव करोति, न त्यागम्, अभावात्, द्वितीयादिषु तु समयेषु ग्रहणमोक्षौ, तथाविधसामर्थ्ययुक्तत्वात्, पुद्गलानां च सङ्घातभेदधर्मत्वात्, एवं जीवोऽपि तत्प्रथमतयोत्पद्यमानः सन् आद्यसमये औदारिकशरीरप्रायोग्याणां पुद्गलानां ग्रहणमेव करोति, न तु मुञ्चत्य-भावात्, द्वितीयादि तु समयेषु ग्रहणमोक्षौ, युक्तिरत्र पूर्ववत्, ततः सङ्घातमेकसामयिकमिति, सङ्घातमित्यत्र नपुंसकता तथा दर्शनात्, तथैव परिशाटनं-परिशाटनाकरणमेकसमयमिति वर्त्तते, सर्वपरिशाटनस्याप्येकसामयिकत्वादेवेति, 'औदा-रिक' इत्यौदारिकशरीरे 'संघायणपरिसाडण' त्ति संघातनपरिशाटनकरणं तु क्षुल्लकभवग्रहणं त्रिसमयोनं, तत् पुन-रेवं भावनीयं—जघन्यकालस्य प्रतिपादयितुमभिप्रेतत्वात् विग्रहेणोत्पाद्यते, ततश्च द्वौ विग्रहसमयावेकः सङ्घातसमय इति तैर्न्यूनं, तथा चोक्तम्—"दो विग्गहंमि समया समयो संघायणाएँ तेहूणं । खुड्डागभवग्गहणं सव्वजहन्नो ठिईकालो ॥ १ ॥" इहच सर्वजघन्यमायुष्कं क्षुल्लकभवग्रहणं, प्राणापानकालस्यैकस्य सप्तदशभाग इति, उक्तं च भाष्यकारेण—"खुड्डागभव-ग्गहणा सत्तरस हवंति आणपाणूंमि' त्ति गाथार्थः ॥

एयं जहन्नमुक्कोसयं तु पलिअत्तिअं तु समऊणं । विरहो अंतरकालो ओराले तस्सिमो होइ ॥ १६४ ॥ (भा.)

इदं जघन्यं सङ्घातादिकालमानम्, उत्कृष्टं तु सङ्घातपरिशाटनकरणकालमानमौदारिके—औदारिकमाश्रित्य पल्यो-पमत्रिकं समयोनम्, तथाहि—इहोत्कृष्टकालस्य प्रतिपाद्यत्वात् अयमविग्रहसमापन्नो गृह्यते, स इहभवात्परभवं गच्छन् इहभवशरीरशाटं कृत्वा परभवायुषः त्रिपल्योपमकालस्य प्रथमसमयेन शरीरसङ्घातं करोति, ततो द्वितीयसमयादारभ्य

सङ्घातपरिशाटोभयकालः, ततस्तेन सङ्घातनासमयेन ऊनं पल्योपमत्रयमिति, ननु यथा सङ्घातसमयेनोनं पल्योपमत्रयं मतं तथा परिशाटसमयेनापि, ततो द्विसमयहीनं पल्योपमत्रयं प्राप्नोति, तदयुक्तं, वस्तुतत्त्वापरिज्ञानात्, निश्चयतो हि भवस्य चरमेऽपि समये सङ्घातपरिशाटावेव, परिशाटस्तु परभवप्रथमसमयेन, अत एकेन समयेनोनता, न द्वाभ्यामिति, उक्तं च—"उक्कोसो समऊणो जो सो संघयणासमयहीणो। किह न दुसमयविहीणो साडणसमएऽवणीयंमि ? ॥ १ ॥ भण्णइ भवचरमंमिवि समए संघायसाडणा चेव। परभवसमए साडणमतो तदूणो न कालोत्ति ॥ २ ॥" एवमौदारिके जघन्येतरभेदः सङ्घातपरिशाटकाल उक्तः, सङ्घातपरिशाटयोस्त्वेक एव समयः, द्वितीयस्यासम्भवात्, अधुना सङ्घातादिविरहो जघन्येतरभेदोऽभिधीयते, तथा चाह—

तिसमयहीणं खुड्डं होइ भवं सव्वबंध—साडाणं। उक्कोस पुव्वकोडी समयो उदही अ तित्तीसं ॥ १६५ ॥ (भा.)

त्रिसमयहीनं क्षुल्लं, 'भवं' ति संपूर्णं क्षुल्लकभवग्रहणं, यथाक्रमं सर्वबन्धशाटयोरन्तरकालः, किमुक्तं भवति ?—सर्वसङ्घातकरणस्य जघन्योऽन्तरकालस्त्रिसमयहीनं क्षुल्लकभवग्रहणं, सम्पूर्णं तु क्षुल्लकभवग्रहणं परिशाटस्येति, कथं सर्वसङ्घातस्य जघन्यान्तरकालस्त्रिसमयहीनं क्षुल्लकभवग्रहणं ?, उच्यते, यदा कश्चिदेकेन्द्रियादिर्जीवो मृतः सन् समयद्वयं विग्रहे कृत्वा क्षुल्लकभवग्रहणायुष्केषु पृथिव्यादिषूत्पन्नः तृतीयसमये औदारिकस्य सङ्घातं कृतवान् तदा औदारिकशरीरमधिकृत्य सङ्घातस्य त्रिसमयन्यूनक्षुल्लकभवग्रहणप्रमाणो जघन्योऽन्तरकालः, उक्तं च—"संघायंतरकालो जहन्नओ खुड्डगं तिसमऊणं। दो विग्गहंमि समया तइओ संघायणासमओ ॥ १ ॥ तेहूणं खुड्डगभवं धरिउं परभवमविग्गहेणेव। गंतूण पढमसमये संघातयतो

स विन्नओ ॥ २ ॥" कथं पुनः सर्वपरिशाटस्य सर्वपरिशाटस्यान्तरपरिमाणं जघन्यं परिपूर्णं क्षुल्लकभवग्रहणं ?, उच्यते– इहानन्तरातीतभवचरमसमये कश्चिदौदारिकशरीरी सर्वपरिशाटं कृत्वा वनस्पतिष्वागत्य सर्वजघन्यक्षुल्लकभवग्रहणायुष्कमनुपाल्य पर्यन्ते सर्वपरिशाटं करोति ततः परिपूर्णं क्षुल्लकभवग्रहणमन्तरं भवति, इहानन्तरातीतभवचरमसमये सर्वपरिशाटविवक्षा व्यवहारनयमतापेक्षया, क्षुल्लकभवग्रहणमनुपाल्य पर्यन्ते परभवप्रथमसमये सर्वपरिशाटो निश्चयनयमतापेक्षया, ततो न कश्चिद्दोषः, अन्यथा क्षुल्लकभवग्रहणप्रथमसमयस्य पूर्वभवशाटेनावरुद्धत्वात् समयहीनं क्षुल्लकभवग्रहणं जघन्यं परिशाटान्तरं स्यात्, तथा सर्वबन्धस्य सर्वसङ्घातरूप उत्कृष्टोऽन्तरकालः पूर्वकोटी तथा समयः, तथा उदधिश्च–सागरोपमाणि च त्रयस्त्रिंशत्, तथाहि–कश्चित् पूर्वभवादविग्रहेण मनुष्यभवे समागत्य प्रथमसमये सङ्घातं कृत्वा पूर्वकोटिप्रमाणायुष्कं परिपाल्यानुत्तरसुरेषूत्पन्नः, तत्र त्रयस्त्रिंशत्सागरोपमाणि उत्कृष्टमायुष्कमनुभूय ततश्च्युत्वा समयद्वयं विग्रहे विधाय तृतीये समये औदारिकशरीरस्य सङ्घातं करोति, इह विग्रहप्रसक्तसमयद्वयमध्यादेकः प्राक्तनपूर्वकोट्यां प्रक्षिप्यते, तत्र त्रयस्त्रिंशत्सागरोपमाणि समयाधिकपूर्वकोट्यधिकान्युत्कृष्टमौदारिकशरीरसङ्घातान्तरं लभ्यते इति, तथा चोक्तम्–"उक्कोसं तेत्तीसं समयाहिय पुवकोडिसहियाइं । सो सागरोवमाइं अविग्गहेणेव संघायं ॥ १ ॥ काऊण पुवकोडिं धरिउं सुरजेट्ठमाउयं तत्तो । भोत्तूण इहं तइए समये संघातयंतस्स ॥२॥" सर्वपरिशाटस्य उत्कृष्टोऽन्तरकाल एष एव समयहीनः, किमुक्तं भवति ?–परिपूर्णानि त्रयस्त्रिंशत्सागरोपमाणि सम्पूर्णा च पूर्वकोटी, तथाहि–कश्चित् संयतमनुष्यः स्वभवचरमसमये औदारिकपूर्वपरिशाटं कृत्वाऽनुत्तरेषु त्रयस्त्रिंशत्सागरोपमाण्यतिवाह्य पुनर्मनुष्येष्वौदारिकसर्वसङ्घातं कृत्वा पूर्वकोट्यन्ते परभवप्रथमसमये

औदारिकसर्वपरिशाटं करोति, इहापि संयतमनुष्यभवचरमसमये सर्वपरिशाटविवक्षा व्यवहारनयमताश्रयणात्, परभवप्रथमसमये निश्चयनयमतापेक्षया, ततो यथोक्तमन्तरपरिमाणं भवति, उक्तं च—"खुड्डागभवग्गहणं जहन्नमुक्कोसयं च तेत्तीसं। तं सागरोवमाइं संपुन्ना पुव्वकोडी य ॥ १ ॥" अन्यथा समयत्रयहीनत्रयस्त्रिंशत्सागरोपमपूर्वकोटिप्रमाणताऽवसेया, यावदेवं व्याख्यानुरोधेन व्याख्या कृता, तत्त्वतः पुनरेवं व्याख्या—'तिसमयहीणं खुड्डं होइ भवं सव्वबंधसाडाणं।' सर्वबन्धस्य सर्वशाटस्य च यथाक्रमं जघन्योऽन्तरकालः क्षुल्लकभवग्रहणं 'त्रिसमयहीन' मिति त्रिभिः—अर्थात् समयैः समयेन च हीनं त्रिसमयहीनं क्षुल्लकभवग्रहणं सर्वसङ्घातस्य जघन्योऽन्तरकालः, समयहीनं सर्वपरिशाटस्येति भावः, 'उक्कोसे' त्यादि, सर्वसङ्घातस्योत्कृष्टोऽन्तरकालः पूर्वकोटी समय उदधयश्च—सागरोपमाणि त्रयस्त्रिंशत्, सर्वपरिशाटस्योत्कृष्टोऽन्तरकालः पूर्वकोटी समयेन हीना उदधयः समयोदधयः, गुडधाना इत्यादाविव मध्यपदलोपी समासः, समयेन हीनानि सागरोपमाणि त्रयस्त्रिंशद्, भावना सर्वाऽपि प्रागुक्तैव द्रष्टव्या। सम्प्रति सङ्घातपरिशाटान्तरमुभयरूपमपि अभिधित्सुराह—

अंतरमेगं समयं जहन्नमोरालगहणसाडस्स। सतिसमया उक्कोसं तित्तीसं सागरा हुंति ॥ १६६ ॥ (भा.)

'अन्तरं' अन्तरालं जघन्यं—सर्वस्तोकं एकं समयमौदारिकस्य 'ग्रहणशाटस्य' ग्रहणं च शाटश्च ग्रहणशाटं तस्य, सङ्घातपरिशाटस्येत्यर्थः, तथाहि—यदा औदारिकशरीरी आयुःपर्यन्तं यावत् सङ्घातपरिशाटोभयं कृत्वाऽग्रेतनभवेऽविग्रहेणोत्पद्यौदारिकस्यैव सङ्घातं कृत्वा पुनरपि तदुभयमारभते तदा एकसमयो जघन्यमुभयान्तरमिति, उत्कृष्टमन्तरं त्रयस्त्रिंशत्सागरोपमाणि सत्रिसमयानि, तथाहि—यथा कश्चित् मनुष्यादिः स्वभवचरमसमये सङ्घातपरिशाटोभयं कृत्वाऽनुत्तरसुरेष्वप्रति-

ष्ठाने वा त्रयस्त्रिंशत्सागरोपमाण्यनुभूय पुनरपि समयद्वयं विग्रहेण गमयित्वा तृतीयसमये औदारिकस्य शरीरस्य सङ्घातमादाय तदनन्तरमुभयमारभते, तत्र तावद् द्वौ विग्रहसमयावेकश्च सङ्घातसमयो देवादिभवसम्बधीनि त्रयस्त्रिंशत् सागरोपमाणीति यथोक्तप्रमाणमुत्कृष्टमुभयान्तरमिति, उक्तं च—"उभयंतरं जहन्नं समओ निव्विग्गहेण संघाते । परमं सतिसमयाइं तेत्तीसं उयहिनामाइं ॥ १ ॥ अणुभविउं देवादिसु तेत्तीसमिहागयस्स तइयंमि । समए संघातयतो नेयाइं समयकुसलेहिं ॥ २ ॥" उक्ता औदारिकमधिकृत्य सर्वसङ्घातादिवक्तव्यता, साम्प्रतं वैक्रियमधिकृत्योच्यते, तत्रेयं गाथा—

वेउव्वियसंघाओ जहन्न समओ उ दुसमयुक्कोसो। साडो पुण समयं चिअ विउव्वणाए विणिद्दिट्ठो ॥१६७॥ (भा.)

वैक्रियस्य संघातः—सर्वसङ्घातकालो 'जघन्यः' सर्वस्तोक एकसमय एव, तुशब्दस्यैवेकारार्थत्वेनावधार्यमाणत्वात्, अयं चौदारिकशरीरिणां वैक्रियलब्धिमतां विकुर्वणारम्भे देवनारकाणां च तत्प्रथमतया शरीरग्रहणेऽवसातव्यः, उक्तं च—"वेउव्वियसंघातो, समओ सो पुण विउव्वणादीए । ओरालियाणमहवा, देवाईणादिगहणंमि ॥ १ ॥" तथा द्विसमयो—द्विसमयमान उत्कृष्टो, वैक्रियसङ्घात इति वर्त्तते, कालतश्चेति गम्यते, स पुनर्यदा औदारिकशरीरी वैक्रियलब्धिमान् विकुर्वणारम्भसमय एव वैक्रियसङ्घातं समयेन कृत्वा स्वायुःक्षयात् मृतो द्वितीयसमये विग्रहाभावेन ऋजुश्रेण्या सुरेषूत्पद्यमानः वैक्रियं सङ्घातयति तदाऽवसातव्यः, आह च—"उक्कोसा समयदुगं जो समयविउव्विउं मओ विइए। समये सुरेसु वच्चइ निव्विग्गहतो तयं तस्स ॥ १ ॥" शाटः पुनर्जघन्यत उत्कर्षतश्च समयमेव कालतो 'विकुर्वणायां' वैक्रियशरीरविषयो निर्दिष्टस्तीर्थकरगणधरैः ॥ अधुना सङ्घातपरिशाटकालमानमभिधित्सुराह—

संघाडणपरिसाडो जहन्नओ इक्कसमइयो होइ । उक्कोसं तित्तीसं सागरनामा उ समऊणा ॥ १६८॥ (भा.)

वैक्रियस्य सङ्घातसम्मिश्रः परिशाटः सङ्घातपरिशाटः उभयरूपः कालतः खलु जघन्य एकसामयिको भवति, तथाहि—यदा केनचिदौदारिकशरीरिणा उत्तरवैक्रियमारब्धं, स च तत्र प्रथमसमये सङ्घातं द्वितीयसमये तु सङ्घातपरिशाटोभयं कृत्वा म्रियते तदा तस्यैकसामयिकः वैक्रियस्य सङ्घातपरिशाट इति, उत्कृष्टस्त्रयस्त्रिंशत् 'सागरनामानि' सागरोपमाणि समयोनानि, तानि चानुत्तरेष्वप्रतिष्ठाने वा सङ्घातसमयहीनान्यवसातव्यानि, उक्तं च—"उभयं जहन्न समओ सो पुण दुसमयविउविअमयस्स । परमयराइं संधातसमयहीणाइं तेत्तीसं ॥ १ ॥" इदानीं वैक्रियमेवाधिकृत्य सङ्घाताद्यन्तरमभिधित्सुराह—

सवग्गहोभयाणं साडस्स य अतरं विउवस्स । समयो अन्तमुहुत्तं उक्कोसं रुक्खकालीअं ॥ १६९ ॥ (भा.)

वैक्रियस्य 'सर्वग्रहोभययोः' सङ्घातसंघातपरिशाटयोः शाटस्य च जघन्यमन्तरं—विरहकालो यथाक्रमं समयं अन्तर्मुहूर्त्तं च, किमुक्तं भवति ?—सङ्घातस्य सङ्घातपरिशाटस्य च समयः, शाटस्यान्तर्मुहूर्त्तं च, सङ्घातस्यान्तरमेवं—औदारिकशरीरिणः समयमेकमुत्तरवैक्रियं कृत्वा मृतस्य द्वितीयसमये विग्रहेण—विग्रहतः तथा तृतीयसमये देवलोके समुत्पद्य वैक्रियसङ्घातं कुर्वतो वेदितव्यं, अत्र हि प्राक्तनवैक्रियसर्वसंघातस्य अग्रेतनोत्तरवैक्रियसङ्घातस्य च विग्रहसमयोऽन्तरमिति, अथवा औदारिकशरीरिणः समयद्वयमुत्तरवैक्रियं कृत्वा तृतीयसमये मृतस्य निर्विग्रहेण देवलोके समुत्पन्नस्य तस्मिन्नेव च तृतीये समये वैक्रियसङ्घातं कुर्वतो ज्ञातव्यं, अत्र ह्येकः समयः सङ्घातपरिशाटयोरन्तरमिति, उक्तं च—"संघायंतरसमओ समयविउवियमयस्स तइयंमि । सो दिवि संघातयतो तइए व मयस्स तइयंमि ॥ १ ॥" सङ्घातपरिशाटोभयस्य जघ-

परिपूर्णं तिर्यङ्मनुष्यवैक्रियश-
न्येनान्तरमेकसामयिकं, य औदारिकशरीरी वैक्रियलब्धिमान् उपकल्पितवैक्रियशरीरः परिपूर्णं तिर्यङ्मनुष्यवैक्रियश-
रीरस्थितिकालं यावत् सङ्घातपरिशाटौ विधाय मृतोऽविग्रहेण देवेषु समुत्पद्य प्रथमसमये वैक्रियशरीरसङ्घातः द्वितीया-
दिसमयेषु तु सङ्घातपरिशाटौ तस्यावाप्येते, उक्तं च—"उभयस्सवि चिरविउवियमतस्स देवेसऽविग्गहमयस्स । अंतरमेगो
समयो नायव्वो समयकुसलेहिं ॥ १ ॥" इह 'चिरविउवियमयस्से' ति यदुक्तं तत् सङ्घातपरिशाटोभयव्यक्तीकरणार्थं,
अन्यथा तृतीयेऽपि समये मृतस्य यथोक्तमन्तरमवाप्यते इति । शाटस्य जघन्यमन्तर्मुहूर्त्तं, यदा कश्चिदौदारिकशरीरी
वैक्रियलब्धिमान् क्वचित् प्रयोजने वैक्रियशरीरं कृत्वा सिद्धकार्यः पर्यन्ते तस्य सर्वशाटं विधाय पुनरौदारिकशरीरमाश्रयति,
तत्र चान्तर्मुहूर्त्तं स्थित्वा पुनरप्युत्पन्नप्रयोजनो वैक्रियं करोति, तत्र चान्तर्मुहूर्त्तं स्थित्वा पुनरप्यौदारिकमागच्छन् वैक्रियस्य
शाटं करोति, तदा वैक्रियस्य शाटस्य शाटस्य चान्तरमौदारिकशरीरवैक्रियशरीरगतमन्तर्मुहूर्त्तद्वयं भवति, तच्च द्वयमपि बृह-
त्तरमेकमेवान्तर्मुहूर्त्तं विवक्षितमतो जघन्यमन्तर्मुहूर्त्तप्रमाणमुक्तमिति, त्रयाणामपि चोत्कृष्टं 'वृक्षकालिकं' वृक्षकालेनानन्तेन
निर्वृत्तं वृक्षकालिकं—अनन्तोत्सर्प्पिण्यवसर्प्पिणीमानं, तथाहि—यदा कश्चित् जीवो वैक्रियशरीरस्य सङ्घातादित्रयं कृत्वा वनस्प-
तिषूत्पद्यते तत्र चानन्तकालमतिवाह्य तत उद्वृत्तः पुनरपि वैक्रियशरीरमासाद्य सङ्घातादित्रयं करोति तदा सङ्घातपरिशाटत-
दुभयरूपस्य त्रयस्याप्यनन्तोत्सर्प्पिण्यवसर्प्पिणीरूपो वनस्पतिकालोऽन्तरे भवतीति ॥ उक्ता वैक्रियशरीरमधिकृत्य सङ्घाता-
दिवक्तव्यता, साम्प्रतमाहारकमधिकृत्य तां प्रतिपादयन्नाह—

**आहारे संघाओ परिसाडो अ समयं समं होइ । उभयं जहन्नमुक्कोसयं च अंतोमुहुत्तं तु ॥ १७० ॥ (भा.)**

'आहारक' इत्याहारकशरीरे 'सङ्घातः' प्राथमिको ग्रहः 'परिशाटश्च' पर्यन्ते मोक्षश्च कालतः 'समयं' कालविशेषमेकम- सङ्घातपरिशाटोभयं
धिकृत्य समं भवति, क्रियाविशेषणमेतत्, कालोऽपि समयमेकं सङ्घातोऽपि समयमेकमित्यर्थः, उभयं— जघन्यं लघुतरं
गृह्यते, तत् जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तं भवति, अन्तर्मुहूर्त्तकालावस्थायित्वात् तस्य, उत्कृष्टान्तर्मुहूर्त्तात्
वेदितव्यं ॥ साम्प्रतमाहारकमेवाधिकृत्य सङ्घाताद्यन्तरमभिधातुकाम आह—

बंधणसाडुभयाणं जहन्नमन्तोमुहुत्तमन्तरणं । उक्कोसेण अवड्ढं पुग्गलपरिअट्ट देसूणं ॥ १७१ ॥ (भा.)

'बन्धनं'सङ्घातः, शाटः—शाट एव, उभयं सङ्घातशाटौ, अमीषां बन्धनशाटोभयानां जघन्यं—सर्वस्तोकमन्तरणं—विरहका-
लोऽन्तर्मुहूर्त्तं, सकृत्परित्यागानन्तरमन्तर्मुहूर्त्तेनैव तदारम्भात्, उत्कर्षेणार्द्धपुद्गलपरावर्त्तो देशोनोऽन्तरं, सम्यग्दृष्टिकाल-
स्योत्कृष्टस्याप्येतावत्परिमाणत्वात्, एतच्च यश्चतुर्दशपूर्वधर आहारकशरीरं कृत्वा प्रमादात् प्रतिपतितो वनस्पत्यादिषु
यथोक्तं कालं स्थित्वा पुनरपि चतुर्दशपूर्वधरत्वमवाप्याहारकशरीरं करोति तदपेक्षया द्रष्टव्यं ॥ उक्ता आहारकशरीरम-
धिकृत्य सङ्घातादिवक्तव्यता, सम्प्रति तैजसकार्म्मणे अधिकृत्याह—

तेयाकम्माणं पुण संताणाऽणाइओ न संघाओ । भव्वाण हुज्ज साडो सेलेसीचरिमसमयम्मि ॥ १७२ ॥ (भा.)

तैजसकार्मणयोः पुनर्द्वयोः शरीरयोः सन्तानानादितः कारणात् न सङ्घातो—न तत्प्रथमतया ग्रहणं, प्रागेव सिद्धि-
प्रसङ्गात्, भव्यानां तु केषाञ्चित् शाटः, कदेत्यत आह—शैलेशीचरमसमये, स चैकसामयिक एव ॥

उभयं अणाइनिहणं संतं भव्वाण हुज्ज केसिंचि । अंतरमणाइभावा अच्चंतऽविओगओ नेसिं ॥ १७३ ॥ (भा.)

संघातादि करणानि

'उभयं' सङ्घातपरिशाटनलक्षणं प्रवाहमङ्गीकृत्य सामान्येन 'अनाद्यनिधनं' अनाद्यपर्यवसितं; केषांचित् पुनर्भव्यानामुभयं 'सान्तं' सपर्यवसानं, नतु सर्वेषां, तथा अन्तरमनादिभावादत्यन्तावियोगतश्च नानयोरिति ॥ अथवेदमन्यत् जीवप्रयोगनिर्वर्त्तितं चतुर्विधं करणं, तथा चाह—

अहवा संघाओ साडणं च उभयं तहोभयनिसेहो। पड–संख–सगड–थूणा जीवपओगे जहासंखं ॥१७४॥(भा.)

अथवाशब्दः प्रकारान्तरप्रदर्शनार्थः, 'सङ्घात' इति सङ्घातकरणं शातनं च–शातनकरणं च उभयं–संघातशातनकरणं च उभयनिषेधः–सङ्घातपरिशाटशून्यं, अमीषामेवोदाहरणान्युपदर्शयति–पटः शङ्खः शकटं स्थूणा 'जीवपयोगे' इति जीवप्रयोगकरणे तत्कायव्यापारमाश्रित्य यथासङ्ख्यमेतान्युदाहरणान्यवसेयानि, तथाहि–पटस्तंतुसङ्घातात्मकत्वात् सङ्घातकरणं, शङ्खस्त्वेकान्तशाटकरणात् शाटकरणं, शकटं तक्षणकीलिकादियोगात् तदुभयकरणं, स्थूणा पुनरूर्ध्वतिर्यक्करणयोगात् सङ्घातशाटविरहादुभयशून्यमिति । उक्तं जीवप्रयोगकरणं, आह–ननु 'जं जं निज्जीवाणं कीरइ जीवप्पयोगतो तं त'मित्यादिनाऽस्याजीवकरणतैव युक्तियुक्तेति, तदप्ययुक्तं, अभिप्रायापरिज्ञानात्, इह चादावेवाथवाशब्दप्रयोगः प्रकारान्तरमात्रदर्शनार्थ इत्युक्तं, ततोऽत्र व्युत्पत्तिभेदमात्रमाश्रीयते, जीवप्रयोगेण करणं जीवप्रयोगकरणं, ज्यायांश्चायमन्वर्थः इत्यलं प्रसङ्गेन । उक्तं द्रव्यकरणं । सम्प्रति क्षेत्रकरणस्यावसरः, तत्रेयं निर्युक्तिगाथा—

खित्तस्स नत्थि करणं आगासं जं अकित्तिमो भावो । वंजणपरिआवन्नं तहावि पुण उच्छुकरणाई ॥ १०३० ॥

इह क्षेत्रस्य नास्ति करणं–क्रियमाणता, यस्मात् क्षेत्रं खल्वाकाशं, आकाशं चाकृत्रिमो भावः–अकृतकः पदार्थः, अकृत-

कस्य च सतो नित्यत्वात् करणत्वानुपपत्तिः, आह–यद्येवं किमिति निर्युक्तिकारेण निक्षेपगाथायामुपन्यस्तं ?, उच्यते–'वंजणे'-त्यादि, इह व्यञ्जनशब्देन क्षेत्राभिव्यञ्जकत्वात् पुद्गला गृह्यन्ते, पर्यायं कथञ्चित् प्रागवस्थापरित्यागेनावस्थान्तरापत्तिं, व्यञ्जनयोगतः पर्यायो व्यञ्जनपर्यायः तमापन्नं सत् तथापि क्षेत्रकरणमुच्यते, इयमत्र भावना–यद्यपि नाम क्षेत्रमकृत्रिमत्वात् करणायोगि तथापि घटपटादिसंयोगतो ये तत्तदवगाह्यमानतालक्षणाः पर्यायास्तेषां करणोपपत्तितः क्षेत्रस्यापि करणोपपत्तिः, पर्यायपर्यायवतोः कथञ्चिदभेदादिति, उपचारतो वा क्षेत्रस्य करणं, तथा चाह–'इक्षुकरणादि' इक्षुक्षेत्रकरणमित्यादि, तथा च लोके वक्तारः–इक्षुक्षेत्रं मया कृतं शालिक्षेत्रं मया कृतमित्यादि, आदिशब्दादेव क्षेत्रे पुण्यादौ करणं क्षेत्रकरणं क्षेत्रे प्ररूप्यमाणं करणं क्षेत्रकरणमित्यादिपरिग्रहः ॥ उक्तं क्षेत्रकरणं, अधुना कालकरणं वक्तव्यं, तत्रेयं गाथा—

कालेऽवि नत्थि करणं तहावि पुण वंजणप्पमाणेणं । बवबालवाइकरणेहिं णेगहा होइ ववहारो ॥ १०३१ ॥

कलनं कालः कलासमूहो वा कालः तस्मिन् कालेऽपि, न केवलं क्षेत्रस्येत्यपिशब्दार्थः, नास्ति करणं–कृतिः, तस्य वर्त्तनादिरूपत्वात्, वर्त्तनादीनां च स्वयमेव भावात्, आह–यद्येवं किमिति निर्युक्तिकृतोपन्यस्तं ?, उच्यते, तथापि व्यञ्जनप्रमाणेन भवतीति शेषः, इह व्यञ्जनशब्देन विवक्षया वर्त्तनाद्यभिव्यञ्जकत्वात् द्रव्याणि परिगृह्यन्ते, तत्प्रमाणेन तन्नीत्या तद्बलेन, तथाहि–वर्त्तनादयस्तद्वतां कथञ्चिदभिन्ना एव, ततश्च तत्करणे तेषामपि करणमेवेति, यद्वा समयादिकालापेक्षयाऽपि व्यवहारनयादस्ति करणं, तथा चाह–बवबालवादिकरणैरनेकधा भवति व्यवहारः, उक्तं च–"बवं च बालवं चेव, कोलवं थीविलोयणं । गलादि वणियं चेव, विट्ठी हवइ सत्तमी ॥१॥" एतानि सप्त करणानि चलानि वर्त्तन्ते, चत्वारि तु शकुनिप्रभृतीनि

स्थिराणि करणानि, उक्तं च—"सउणि चउप्पय नागं किंसुग्घं च करणं थिरं चउहा। बहुलचउद्दसिरत्तिं सउणी सेसं तियं कमसो ॥ १ ॥" एषाऽत्रोत्तरार्द्धभावना—कृष्णचतुर्दशीरात्रौ शकुनिः अमादिने चतुष्पदं अमारात्रौ नागकरणं, प्रतिपद्दिवा किंस्तुघ्नं, तदनन्तरं रजनीदिनेषु बवादीनि करणानि, तेषां च परिज्ञानोपायोऽयं—"पक्खतिहओ दुगुणिया दुरूवहीणा य सुक्कपक्खंमि। सत्तहिंए देवसियं तं चिय रूवाहियं रत्तिं ॥ १ ॥" अस्या अक्षरगमनिका—कृष्णस्य शुक्लस्य वा प्रस्तुतपक्षस्य अतिक्रान्ता यास्तिथयः ता द्विगुणीक्रियन्ते, तत आगतराशेः सप्तभिर्भागो ह्रियते, एवं कृते यत्करणमागच्छति तत्प्रस्तुततिथौ कृष्णपक्षे दैवसिकं विज्ञेयं, रूपाधिकं तु तदेव रात्रौ, तथाहि—कृष्णदशम्यां द्विगुणितायां विंशतिर्भवति, ततः सप्तभिर्भागे हृते षट् शेषा जाताः, आगतं षष्ठं वणिजाभिधानं दैवसिकं करणं, रूपे त्वत्र प्रक्षिप्ते रात्रिगतं विष्ट्यभिधानं सप्तमं करणं लभ्यते, एवमन्यत्रापि कृष्णपक्षे, शुक्लपक्षे विशेषमाह—'दुरूवहीणा य सुक्कपक्खम्मि'त्ति शुक्लपक्षे द्विगुणतिथिराशेर्द्वौ पात्येते ततो दैवसिकं करणमागच्छति, तदेव रूपाधिकं रात्रौ, सूत्रे द्वितीया सप्तम्यर्थे प्राकृतत्वात्, प्राकृते हि विभक्तीनां व्यत्ययो भवति, यदाह पाणिनिः स्वप्राकृतलक्षणे—'व्यत्ययोऽप्यासा'मिति, रात्रिगतं करणं भवतीत्यर्थः, यथा शुक्लचतुर्थ्यां द्विगुणितायां अष्टौ भवन्ति, तेभ्यो द्वौ पात्येते, जाताः षट्, सप्तभिश्च भागो न पूर्यते, तत आगतं षष्ठं दैवसिकं वणिजाभिधानं करणं, रूपे तु प्रक्षिप्ते सप्तमं विष्ट्यभिधानं रात्रिगतं करणं, एवमन्यत्रापि शुक्लपक्षे भावनीयं, इह लोकप्रसिद्धः करणानयनोपायोऽपि विद्यते 'तिहि दुगुणी एक्किहिं ऊणी सत्तहिं हरणं सेसं करण'मिति, अयमपि युक्तः, केवलमिह मासतिथयो द्विगुणितव्याः, यच्चेहागच्छति तद्रात्रिगतं करणं, रूपे तु पातिते दिवसगतमिति, एवं च करणद्वयेनापि शुक्ल-

पक्षे प्रतिपदि निशि ववकरणं, द्वितीयायां दिवसे बालवं, रात्रौ कौलवं, तृतीयायाः दिवसे स्त्रीविलोचनं निशि गरादि चतु-
र्थ्यां दिवसे वणिजं निशि विष्टिरित्येवमादि स्वयं भावनीयं, उक्तं च—"किण्हनिसि तइअदसमीसत्तमिचाउद्दसीसु अह विट्ठी ।
सुक्कचउत्थिक्कारसिनिसि अट्ठमि पुण्णिमाइ दिवा ॥ १ ॥ सुद्धस्स पडिवइनिसि पंचमिदिणि अट्ठमीइ राइम्मि । दिवसस्स
बारसी पुण्णिमाइ रत्तिं ववं होइ ॥ २ ॥ बहुलस्स चउत्थीए दिवा य तह सत्तमीअ राइम्मि । इक्कारसीइ उ दिवा ववकरणं
होइ नायव्वं ॥ ३ ॥" इत्यादि, अलं प्रसङ्गेन ॥ उक्तं कालकरणं, अधुना भावकरणमभिधीयते—तत्र भावः—पर्यायः,
तस्य जीवाजीवोपाधिभेदत्वात् तत्करणमप्योघतो द्विविधमेव, तथा चाह—
जीवमजीवे भावे अजीवकरणं तु तत्थ वण्णाई । जीवकरणं तु दुविहं सुअकरणं नो अ सुअकरणं ॥ १०३२ ॥
इह अलाक्षणिको मकारः प्राकृतत्वात्, भावे—भावविषयं करणं द्विविधं, तद्यथा—जीवे अजीवे च, तत्राल्पवक्तव्यत्वाद-
जीवभावकरणमेवादावुपदर्शयति—अजीवकरणं तुशब्दस्य विशेषणार्थत्वात् अजीवभावकरणं परिगृह्यते, तत्र—तयोर्मध्ये
वर्णादि, किमुक्तं भवति ?—यदिह परप्रयोगमन्तरेणाभ्रादेर्नानावर्णान्तरगमनं, आदिशब्दात् गन्धादिपरिग्रहः, एतत्सर्वम-
जीवभावकरणं, ननु च द्रव्यकरणमपि विश्रसाविषयमेवंप्रकारमेवोक्तं ततः कोऽत्र भावकरणे विशेषः ?, उच्यते, इह भा-
वाधिकारात् पर्यायप्राधान्यमाश्रीयते, तत्र तु द्रव्यप्राधान्यमित्यदोषः, जीवकरणं तु जीवभावकरणादि च जीवभावत्वात्
द्विविधं श्रुतभावकरणं नोश्रुतभावकरणं च—गुणकरणादि, चशब्दस्य च व्यवहितः सम्बन्धः ॥ सम्प्रति जीवभावकरणेना-
धिकार इति, तदेव यथोद्दिष्टं तथैव च भेदतः प्रतिपिपादयिषुराह—

वद्धमवद्धं तु सुअं वद्धं तु दुवालसंग निद्दिट्ठं । तव्विवरीअमवद्धं निसीहमनिसीह वद्धं तु ॥ १०३३ ॥

श्रुतं द्विविधं-द्विप्रकारं, तद्यथा-वद्धमवद्धं च, तुशब्दो विशेषणार्थः, स च लौकिकलोकोत्तरभेदभिन्नतां श्रुतस्य विशिनष्टि, लौकिकं लोकोत्तरं च श्रुतं प्रत्येकं वद्धमवद्धं च, तत्र पद्यगद्यवन्धनाद्बद्धं शास्त्रवत्, तथा चाह-वद्धं तु द्वादशाङ्गम्-आचारादिगणिपिटकं निर्दिष्टं, तुशब्दस्य विशेषणार्थत्वात् लोकोत्तरमिदं, लौकिकं तु भारतादि विज्ञेयं तद्विपरीतमवद्धं, लोकलोकोत्तरभेदमेवावसेयं, 'निसीहमनिसीहवद्धं' इति, वद्धं श्रुतं द्विविधं, तद्यथा-निशीथमनिशीथं च, तुशब्दोऽत्रापि लौकिकलोकोत्तरभेदभिन्नताख्यापनार्थः, तत्र रहसिपाठात् रहस्युपदेशाच्च निशीथमुच्यते, प्रकाशपाठात्प्रकाशोपदेशाच्चानिशीथमिति ॥ साम्प्रतमनिशीथनिशीथयोरेव स्वरूपप्रतिपादनार्थमाह—

भूएऽपरिणइ विगए सद्दकरणं तहेव न निसीहं । पच्छन्नं तु निसीहं निसीहनामं जहऽज्झयणं ॥ १०३४ ॥

भूतं-उत्पन्नं अपरिणतं-नित्यं विगतं-विनष्टं भूतापरिणतविगतं, समाहारत्वादेकवचनं, किमुक्तं भवति ?-'उप्पण्णेइ वा विगमेइ वा धुवेइ वा' इत्यादि, किंविशिष्टमित्याह-शब्दकरणं-शब्दः क्रियते यस्मिन् तत् शब्दकरणं, उक्तं च-"ओत्ती सद्दकरणं पगासपाढं च सरविसेसो वा" । न निशीथं भवति, इयमत्र भावना-यत् उत्पादाद्यर्थप्रतिपादकं तथा महताऽपि शब्देन प्रतिपाद्यं तत् प्रकाशपाठात् प्रकाशोपदेशाच्चानिशीथमिति, प्रच्छन्नं तन्निशीथं, रहसि पाठात् रहस्युपदेशाच्च, यथा निशीथनामकमध्ययनमिति, अथवा निशीथं गुप्तार्थमुच्यते, यथा अग्रायणीये वीर्यपूर्वे अस्तिनास्तिप्रवादे च पाठः, 'जत्थेगो दीवायणो भुंजइ तत्थ दीवायणसयं भुंजइ, जत्थ दीवायणसयं भुंजइ तत्थेगो दीवायणो भुंजइ' तथा 'जत्थेगो

दीवायणो हम्मइ तत्थ दीवायणाणं सयं हम्मइ, जत्थ दीवायणसयं हम्मइ तत्थेगो दीवायणो हम्मइ" तथा चामुमेवार्थमभिधातुकाम आह—

अग्गेअणीअम्मि जहा दीवायणु जत्थ एगु तत्थ सयं । जत्थ सयं तत्थेगो हम्मइ वा भुंजई वावि ॥ १०३५ ॥

अक्षरगमनिका तु प्रतीता, इदमालापकद्वयमपि सम्प्रदायादप्रतीतार्थमिति गुप्तार्थत्वान्निशीथमिति ॥

एवं बद्धमबद्धं आएसाणं भवंति पंचसया । जह एगा मरुदेवी अच्चंत थावरा सिद्धा ॥ १०३६ ॥

एवमनन्तरोक्तप्रकारं सर्वं लोकोत्तरश्रुतं, लौकिकं त्वारण्यकादिषु द्रष्टव्यं, अबद्धं पुनरादेशानां भवंति पञ्च शतानि, किंभूतानीत्यत आह—यथैका—तस्मिन् समये अद्वितीया मरुदेवी ऋषभजननी अत्यन्तस्थावरा—अनादिवनस्पतिराशेरुद्धृत्ता सिद्धा—निष्ठितार्था सञ्जाता, उपलक्षणमेतत्, अन्येषामपि स्वयम्भूरमणजलधिमत्स्यपद्मपत्राणां वलयव्यतिरिक्तसकलसंस्थानसम्भवादीनामिति, लौकिकमप्यनिबद्धं वेदितव्यं अड्डिकमत्यड्डिकादि, ग्रन्थानिबद्धत्वात्, अत्र वृद्धसम्प्रदायः—आरहए पवयणे पंच आदेससयाणि अणिबद्धाणि, तत्थेगं मरुदेवा, नहि अंगे उवंगे वा पाढो अत्थि जहा अच्चंतथावरा होऊण सिद्धा इति, बिइयं सयंभुरमणसमुद्दे मच्छाणं पउमपत्ताण य सव्वसंठाणाणि संति वलयसंठाणं मोत्तुं, तइयं विण्हुस्स साइरेगजोयणसयसहस्सविउव्वणं, चउत्थं करडउकुरडा दोसड्डिएरुयज्झाया कुणालनयरीए निद्धमणमूले वसही वरिसायाले देवयाणुकंपणं, न वरिसइ नगरपरिसरे, अण्णत्थ सव्वत्थ वरिसइ, लोको अद्दण्णो, निमित्तियं, एएसिं गुणे(हि)न वरिसइ, ततो नागरगेहिं तेसिं निच्छुभणं करेउमाढत्तं, ते पुच्छंति—कीस निच्छुभह ?, लोगा भणंति—जाव तुब्भे एत्थ नगरे ताव न वरिसइ,

तो गच्छह, करडेण रुसिएणं भणियं–वरिस देव ! कुलाणाए, उक्कुरुडेणं भणियं–दस दिवसाणि पंच च, पुणरवि करडेण भणियं–मुट्ठिमेत्ताहिं धाराहिं, उक्कुरुडेण भणियं–जहा रत्तिं तहा दिवा, एवं वोत्तूण अवक्कंताओ, कुणालावि पन्नरसदिवसअणुबंधवरिसणेणं सजणवया जलेणं अक्कंता, ततो ते तइए वरिसे साकेए नगरे दोऽवि कालं काऊण अहेसत्तमाए पुढवीए काले नगरे बावीससागरोवमट्ठिइया नेरइया संवुत्ता, कुणालनगरीविणासकालातो तेरसमे वरिसे वीरस्स केवलुप्पत्ती, एवं अणिवद्धं, एवमादि पंचादेससयाणि अवद्धाणि, एवं लोइयं अवद्धकरणं वत्तीसं अड्डियातो सोलस करणाणि, लोगपवाए पंचट्ठाणाणि, तंजहा–आलीढं पच्चालीढं वइसाहं मंडलं समपादं, तत्थ आलीढं नाम दाहिणं पायं अग्गतोहुत्तं काऊणं वामपायं पच्छतोहुत्तं उसारेउं अंतरा दोण्हवि पादाणं पंचपाए, पच्चालीढं वामपायं अग्गतोहुत्तं काऊणं दाहिणपायं पच्छतोहुत्तं ऊसारेइ, एत्थवि अंतरा दोण्हवि पायाणं पंच पया, वइसाहं पण्हीतो अब्भिंभउरकुंतीओ समसेढीए करेइ, अग्गिमतला बाहिरहुत्ता, मंडलं नाम दोवि पाए दाहिणवामहुत्ता ऊरुणो (दोण्हं) अन्तरा चत्तारि पया, समपायं नाम दोऽवि पादे समं निरंतरं ठवेइ, एयाणि पंच ठाणाणि लोयप्पवादे, सयणकरणं छट्ठं ठाणमित्यलं विस्तरेण । उक्तं श्रुतकरणं, अधुना नोश्रुतकरणमभिधित्सुराह—

नोसुअकरणं दुविहं, गुणकरणं तहय जुंजणाकरणं । गुणकरणं पुण दुविहं, तवकरणे संजमे य तहा ॥ १०३७॥

श्रुतकरणं न भवतीति नोश्रुतकरणं, 'अमानोनाः प्रतिषेधवाचका' इति वचनात्, 'द्विविधं' द्विप्रकारं, तद्यथा–'गुणकरणं' गुणानां करणं, गुणानां कृतिरित्यर्थः, तथेति निर्देशे, चः समुच्चये, व्यवहितश्चास्य प्रयोगः, योजनाकरणं च मनः-

प्रभृतीनां व्यापारकरणमिति भावः, गुणकरणं पुनर्द्विविधं—द्विप्रकारं, कथमित्याह—'तपःकरणं' तपसः—अनशनादेर्बाह्याभ्यन्तरभेदभिन्नस्य करणं—कृतिस्तपःकरणं, संयमे च—संयमविषयं चाश्रवविरमणादि करणमिति भावः ॥ साम्प्रतं योजनाकरणं व्याचिख्यासुराह—

जुंजणकरणं तिविहं मण-वय-काए य मणसि सच्चाइ । सट्ठाणि तेसि भेओ चउ चउहा सत्तहा चेव ॥ १०३८ ॥

योजनाकरणं त्रिविधं, तद्यथा—'मनोवाक्काये'मनोवाक्कायविषयं, मनोविषयं वाग्विषयं कायविषयं चेत्यर्थः । तत्र मनसि सत्यादि योजनाकरणं, तद्यथा—सत्यमनोयोजनाकरणमसत्यमनोयोजनाकरणं सत्यमृषामनोयोजनाकरणं असत्यमृषामनोयोजनाकरणमिति, स्वस्थाने प्रत्येकं मनोवाक्कायलक्षणे तेषां—योजनाकरणानां भेदो—विभागो वक्तव्यः, तद्यथा—चतुर्धा चतुर्धा सप्तधा चेति, अयमत्र भावार्थः—चतुर्भेदं सत्यमनोयोजनाकरणादि दर्शितं, एवं वाग्योजनाकरणमपि सत्यवाग्योजनाकरणादिचतुर्भेदमवसातव्यं, काययोजनाकरणं सप्तभेदं, औदारिककाययोजनाकरणं औदारिकमिश्रकाययोजनाकरणं वैक्रियकाययोजनाकरणं वैक्रियमिश्रकाययोजनाकरणं आहारककाययोजनाकरणमाहारकमिश्रकाययोजनाकरणं कार्म्मणकाययोजनाकरणमिति ॥ इत्थं तावद् व्यावर्णितं यथोद्दिष्टं करणं, अधुना येनात्राधिकारस्तदुपदर्शनार्थमाह—

भावसुअसद्दकरणे अहिगारो इत्थ होइ नायव्वो । नोसुअकरणे गुणजुंजणे अ जहसंभवं होइ ॥ १०३९ ॥

भावश्रुतशब्दकरणे प्रकाशपाठे भावश्रुते च अधिकारो भवति कर्त्तव्यः श्रुतसामायिकस्य, न तु चारित्रसामायिकस्य, तस्यांते यथासम्भवमभिधानात्, भावश्रुत सामायिकोपयोग एव, शब्दकरणमप्यत्र तच्छन्दविशिष्टः श्रुतभाव एव विव-

क्षितो, नतु द्रव्यश्रुतं, तस्य तत्त्वतः श्रुतसामायिकेऽनवतारात्, नोश्रुतकरणे–नोश्रुतकरणमधिकृत्य 'गुणजुंजणे य'त्ति गुणकरणे योजनाकरणे ते यथासंभवं भवति, अधिकरणमिति गम्यते, तत्र यथासंभवमिति गुणकरणे चारित्रसामायिकस्यावतारः, तपःसंयमगुणात्मकत्वाच्चारित्रस्य, योजनाकरणे च मनोयोजनायां वाग्योजनायां च सत्यासत्यामृषारूपे द्वये श्रुतसामायिकचारित्रसामायिकयोरप्यवतारः, काययोजनायामपि औदारिककाययोगे भङ्गिकश्रुतसामायिकस्याप्यवतारः, समितिगुप्तिपरिपालने चारित्रसामायिकस्येति ॥ सम्प्रति सामायिककरणमेवाव्युत्पन्नविनेयवर्गव्युत्पादनार्थं सप्तभिरनुयोगद्वारैः कृतादिभिर्निरूपयति—

कयाकयं १ केण कयं २ केसु अ दव्वेसु कीरई वावि ३ ।
काहे व कारओ ४ नयओ ५ करणं कइविहं ६ (च) कहं ७ ॥ १०४० ॥

सामायिकस्य करणमिति क्रियां श्रुत्वा चोदक आक्षिपति–एतत् सामायिकं अस्याः क्रियायाः प्राक् किं कृतं सत् क्रियते ? आहोस्विदकृतं ? किंचातः ?, उभयथाऽपि दोषः, तथाहि–कृतपक्षे सद्भावादेव करणानुपपत्तिः, अकृतपक्षेऽपि वांध्येयादेरिव करणायोगः, पूर्वमेकान्तेनासत्त्वात्, अत्र निर्वचनं कृताकृतं, कृतं चाकृतं च कृताकृतं, अत्र नयमतभेदेन भावना कर्त्तव्या १, तथा केन कृतमिति वक्तव्यं २, तथा केषु द्रव्येषु इष्टादिषु क्रियते ३, तथा कदा च कारकोऽस्या भवतीति वाच्यं ४, तथा 'नयओ'त्ति आलोचनादिनयेन वक्तव्यं ५, तथा करणं 'कतिविहं' कतिभेदमिति वाच्यं ६, तथा

कथं—केन प्रकारेण सामायिकं लभ्यते इति वक्तव्यमिति गाथासङ्क्षेपार्थः । अवयवार्थं तु भाष्यकार एव वक्ष्यति, तत्राद्यद्वारप्रतिपादनार्थमाह—

उप्पन्नाणुप्पन्नं कयाकयं इत्थ जह नमुक्कारे । केणंति अत्थओ तं जिणेहिं सुत्तं गणहरेहिं ॥ १७५ ॥ (भा.)

कृताकृतं नाम उत्पन्नानुत्पन्नमभिधीयते, सर्वमेव च वस्तूत्पन्नानुत्पन्नं क्रियते, वस्तुनो द्रव्यपर्यायोभयरूपत्वात्, अत्र नैगमादिनयैर्भावना कार्या, तथा चाह—अत्र यथा नमस्कारे नयभावना कृता तथैव कर्त्तव्येति गम्यते, सा पुनर्नमस्कारानुसारेण स्वयं भावनीया । द्वारम् । अधुना द्वितीयद्वारमधिकृत्याह—केनेति केन कृतमित्यत्र निर्वचनं—'अर्थतः' अर्थमङ्गीकृत्य तत् सामायिकं जिनवरैः, सूत्रं त्वङ्गीकृत्य गणधरैः कृतं, व्यवहारनयमतमेतत्, निश्चयनयमतं तु व्यक्त्यपेक्षया यो यत्स्वामी तत्तेनैव, व्यक्त्यपेक्षश्चेह तीर्थकरगणधरयोरुपन्यासः प्रधानव्यक्तित्वाद्, अन्यथा पुनरुक्तदोषप्रसङ्गः ॥ तथा चात्रोक्तं भाष्यकारेण—"ननु निग्गमे गयं चिय केण कयं तंति का पुणो पच्छा ? । भन्नइ स बज्झकत्ता इहंतरंगो विसेसोऽयं ॥ १ ॥" ( विशे. २३८३ ) वाह्यकर्त्ता सामान्येन अन्तरङ्गस्तु व्यक्त्यपेक्षयेति भावना । साम्प्रतं केषु द्रव्येषु क्रियत इत्येतद्विवृण्वन्नाह—

तं केसु कीरई ? तत्थ नेगमो भणइ इट्ठदवेसुं । सेसाण सवदवेसु पज्जवेसुं न सवेसु ॥ १७६ ॥ (भा.)

'तत्' सामायिकं 'केषु' द्रव्येषु स्थितस्य सतः क्रियते—निर्वर्त्यते इति प्रश्नः, अत्र नयविभागेन निर्वचनं, तत्र नेगमो भणति—नैगमनयो भाषते, इष्टद्रव्येषु मनोज्ञपरिणामकारणत्वात् मनोज्ञेष्वेव शयनासनादिषु द्रव्येषु, तथा च तेषा-

सयणासणं। मणुण्णंसि अगारंसि, मणुण्णं झायए मुणी ॥१॥" इत्यादि,
मागमः—"मणुण्णं भोयणं भोच्चा, मणुण्णं सयणासणं। मणुण्णंसि अगारंसि, मणुण्णं झायए मुणी ॥ १ ॥" इत्यादि, किंचिन्मनोज्ञमिति व्यभिचारात् सर्वद्रव्येषु
शेषाणां—सङ्ग्रहादीनां सर्वद्रव्येषु, शेषनया हि परिणामविशेषात् कस्यचित् किंचिन्मनोज्ञमिति व्यभिचारात्, तथाहि—यो यत्र निष-
स्थितस्य क्रियते सामायिकं यत्र मनोज्ञपरिणाम इति मन्यन्ते, पर्यायेषु न सर्वेषु, अवस्थानाभावात्, अन्यथा पुनरुक्तदोषः, तथा
द्यादौ स्थितो न स तत्र तत्सर्वपर्यायेषु, एकभाग एवावस्थितत्वात्, इत्थं चैतदङ्गीकर्त्तव्यं, अन्यथा पुनरुक्तदोषः, तथा
चोक्तं भाष्यकारेण—"नणु भणियमुवग्घाते केसुत्ति इहं कओ पुणो पुच्छा?। केसुत्ति तत्थ विसओ इह केसु ठियस्स तल्लाभो
॥ १ ॥ तो किह सव्वदव्वावत्थाणं? नणु जाइमेत्तवयणातो। धम्माइसव्वदव्वाधारो सव्वो जणोऽवस्सं ॥ २ ॥" (विशे-
३३८७—३३८८) अथवोपोद्घाते सर्वद्रव्याणि विषयः सामायिकस्य, इह तान्येव सर्वद्रव्याणि सामायिकस्य हेतुः, श्रद्धेय-
ज्ञेयक्रियाविषयत्वात्, अथवाऽन्यथाऽपुनरुक्तिः—कृताकृतादिगाथायां कृतमकृतं वा सामायिकं कार्य—कर्म्म, कर्त्तुरीप्सिततम-
त्वात्, केन कृतमिति कर्तृप्रश्नः, केषु द्रव्येष्विति साधकतमकरणप्रश्नः, सप्तमीबहुवचनं तु तृतीयाबहुवचने प्राकृतत्वात्,
न चैतदपि स्वमनीषिकया व्याख्यानं, यतोऽभ्यधायि भाष्यकारेण—"विसओऽवि उवग्घाए केसुत्ति इहं स एव हेउत्ति। सद्धेय-
नेयकिरियानिबंधणं जेण सामइयं ॥ १ ॥ अहवा कयाकयाइसु कज्जं केण व कयं च कत्तत्ति। केसुत्ति करणभावो तइ-
यत्थे सत्तमिं काउं ॥ २ ॥" (विशे. ३३८९—३३९०) इत्यलं प्रसङ्गेन। द्वारम्। सम्प्रति कदा कारकोऽस्य भवती-
त्येतत् नयैर्निरूपयन्नाह—

काहु? उद्दिट्ठे णेगम उवट्ठिए संगहो य ववहारो। उज्जुसुओ अक्कमंते सद्दु समत्तंमि उवउत्तो ॥ १७७ ॥ (भा.)

सामायिके कृताकृतादिः

कदाऽसौ सामायिकस्य कारको भवतीति प्रश्नः, अत्र नयैर्निर्वचनं–'उद्दिट्ठे नेगम'त्ति उद्दिष्टे सति नैगमो मन्यते, इयमत्र भावना–सामान्यग्राहिणो नैगमनयस्य उद्दिष्टमात्र एव सामायिके गुरुणा शिष्योऽनधीयानोऽपि तक्रियाननुष्ठायी सन् सामायिकस्य कर्त्ता, वनगमनप्रस्थितप्रस्थककर्तृवत्, यस्मात् उद्देशोऽपि सामायिककारणं, तस्मिंश्च कारणे कार्योपचारः, 'उवट्ठिते संगहो य ववहारो'त्ति सङ्ग्रहो व्यवहारश्च उपस्थितः सन् कारको भवतीति, इयमत्र भावना–इह उद्देशानन्तरं वाचनाप्रार्थनाय यदा वन्दनं दत्त्वोपस्थितो भवति तदा प्रत्यासन्नतरकारणत्वात् सङ्ग्रहव्यवहारयोः कारक इति, ऋजुसूत्र आक्रमन् कारको भवतीति मन्यते, एतदुक्तं भवति–उद्देशानन्तरं गुरुपादमूले वन्दित्वोपस्थितः सामायिकं पठितुमारब्धः कारकः, वृद्धास्तु व्याचक्षते–न पठन्नेव, किन्तु समाप्ते कारक इति, सामायिकक्रियावान् प्रतिपद्यमानस्तदुपयोगरहितोऽपि कारकः, यस्मात् सामायिकार्थस्य सामायिकशब्दक्रिये असाधारणं कारणं, असाधारणकारणेन च व्यपदेश इति, 'सद्दु समत्तंमि उवउत्तो'त्ति, शब्दादयो मन्यन्ते–समाप्ते सत्युपयुक्ते एव कारको भवति, त्रयाणां शब्दादीनां नयानां शब्दक्रियावियुक्तोऽपि सामायिकोपयुक्तः कारकः, मनोज्ञतथापरिणामरूपत्वात् सामायिकस्य, कदा कारक इति गतं। सम्प्रति नयत इत्येतद् द्वारं विवरीषुराह—

आलोयणा १ य विणए २ खित्त ३ दिसाऽभिग्गहे ४ अ काले ५ य।
रिक्ख ६ गुणसंपयाऽविअ ७ अभिवाहारे ८ अ अट्ठमए ॥ १७८ ॥ (भा.)

इहाभिमुख्येन गुरोरात्मदोषप्रकाशनमालोचनानयः, तथा विनयः पदधावनादि क्षेत्रं–इक्षुक्षेत्रादि दिगभिग्रहो–वक्ष्यमा-

णलक्षणः कालः—अहरादिः ऋक्षसम्पत्—नक्षत्रसंपत् गुणाः—प्रियधर्मत्वादयः तेषां सम्पत् गुणसम्पत्, अभिव्याहरणं अभिव्याहारः अष्टमो नय इति गाथासमासार्थः, व्यासार्थं तु प्रतिपदं भाष्यकार एव सम्यक् व्यक्षेण वक्ष्यति ॥ तथा चाद्यं द्वारं व्याचिख्यासुराह—

पव्वजाए जुग्गं तावइआलोयणा गिहत्थेसु । उवसंपयाइ साहूसु सुत्थे अत्थे तदुभये य ॥ १७९ ॥ (भा.)

'प्रव्रज्याया' निष्क्रमणस्य यत् प्राणिजातं स्त्रीपुरुषनपुंसकभेदं योग्यं—अनुरूपं, तदन्वेषणीयमिति वाक्यशेषः, तावतीएतावत्येवालोचना अवलोकना वा, केषु?—गृहस्थेषु—गृहस्थविषया, इयमत्र भावना—योग्यं हि सर्वोपाधिविशुद्धमेव भवति, ततस्तदन्वेषणमवश्यं कर्त्तव्यं, तच्चैवम्—कस्त्वं ? को वा ते निर्वेद ? इति पूर्वं प्रश्नो विधेयः, तस्मिंश्च विहिते प्रयुक्तालोचनस्य योग्यतावधारणं, तदनन्तरं सामायिकं दद्यात्, न शेषाणां प्रतिषिद्धदीक्षाणामिति नयः, एवं तावत् गृहस्थस्याकृतसामायिकस्य सामायिकार्थमालोचनोक्ता, सम्प्रति कृतसामायिकस्य यतेः प्रतिपादयति—उपसम्पदि साधुषु, आलोचनेति वर्त्तते, सूत्रे अर्थे तदुभये च, अत्रापीयं भावना—सामायिकसूत्राद्यर्थं यदा कश्चिदुपसम्पदं प्रयच्छति यतिस्तदा स आलोचनां ददाति, अत्र विधिः सामाचार्यामुक्त एव, आह—अल्पं सामायिकसूत्रं, तत् कथं तदर्थमपि यतेरुपसंपत् ?, तदभावे वा कथं यतिः ? कथं वा प्रतिक्रमणं ? प्रतिक्रमणमन्तरेण शुद्धिर्वेति, उच्यते, मन्दग्लानादिव्याघाताद् विस्मृतसूत्रस्य यतेः सूत्रार्थमप्युपसम्पदविरुद्धैव, एष्यत्कालं वा दुष्षमान्तमालोक्यानागतामर्पकं सूत्रमिति, तदभावेऽपि तदा चारित्रप-

रिणामोपेतत्वात् असौ यतिरेव, शुद्धिश्चास्य यावत्सूत्रमधीतं तावतैव प्रतिक्रमणं कुर्वतः, इत्यलं प्रसङ्गेन ॥ अधुना एकगाथयैव विनयादिद्वारत्रयं व्याचिख्यासुराह—

आलोइए विणीअस्स दिज्जए तं पसत्थखित्तम्मि । अभिगिज्झ दो दिसाओ चरंतिअं वा जहाकमसो ॥१८०॥ (भा.)

आलोचिते सति 'विनीतस्य' पादधावनानुरागादिविनयवतः, उक्तं च भाष्यकारेण—"अणुरत्तो भत्तिगतो अमुई अणुयत्तगो विसेसण्णू । उज्जुत्तमपरितंतो इच्छियमत्थं लहइ साहू ॥ १ ( विशे. ३४०३ ) दीयते तत् सामायिकं, तस्यापि न यत्र क्वचित्, किन्तर्हि ?, प्रशस्तक्षेत्रे—इक्षुक्षेत्रादौ, उक्तं च—"उच्छुवणे सालिवणे पउमसरे कुसुमिते व वणसंडे । गंभीरसाणुणादे पयाहिणजले य जिणघरे वा ॥ १ ॥ दिज्ज न उ भग्ग झामिय, सुसाणसुन्नामणुन्नगेहेसु । छारंगारकयारामिज्झादीदव्वदुट्ठे वा ॥ २ ॥ ( विशे. ३४०४–३४०५ ) तथा अभिगृह्य—अङ्गीकृत्य द्वे दिशौ पूर्वां वा उत्तरां वा, दीयते इति वर्त्तते, तथा चरन्ती नाम यस्यां दिशि तीर्थकरकेवलिमनःपर्यायज्ञानावधिज्ञानिचतुर्दशपूर्वधरादयो यावत् युगप्रधाना विहरन्ति, 'यथाक्रमं' इति गुणापेक्षं यथाक्रमेण दिक्ष्वेतासु दीयते, उक्तं च—"पुव्वाभिमुहो उत्तरमुहो व देज्जाऽहवा पडिच्छेज्जा । जाए जिणादयो वा दिसाए जिणचेइयाइं व ॥ १ ॥" त्ति, गतं द्वारत्रयम् । अधुना कालादित्रयमेकगाथयैवाभिधित्सुराह—

पडिकुट्ठदिणे वज्जिअ रिक्खेसु अ मिगसिराइ भणिएसु । पियधम्माईगुणसंपयासु तं होइ दायव्वं ॥१८१॥ (भा.)

'प्रतिकुष्टानि' प्रतिषिद्धानि यानि चतुर्दश्यादीनि तानि दिनानि वर्जयित्वा, अप्रतिकुष्टेष्वेव पञ्चम्यादिषु दातव्यमिति योगः, उक्तं च—"चाउद्दसिं पन्नरसिं वज्जिज्जा अट्ठमिं च नवमिं च । छट्ठिं च चउत्थिं बारसिं च दुण्हंपि पक्खाणं ॥ १ ॥"

( विशे. ३४०७ ) तेष्वपि दिनेषु प्रशस्तेषु मुहूर्त्तेषु दीयते, न अप्रशस्तेषु, तथा ऋक्षेषु च मृगशिरःप्रभृतिषु ग्रन्थान्तराभिहितेषु, नतु प्रतिषिद्धेषु, उक्तं च—"मिगसिर अद्दा पुस्सो तिण्णि पुवा य मूलमस्सेसा । हत्थो चित्ता य तहा दस वुड्ढिकराइं नाणस्स ॥ १ ॥" ( विशे. ३४०८ ) तथा—संझागयं रविगयं, विड्डेरं सग्गहं विलम्बं च । राहुहयं गहभिन्नं च वजए सत्त नक्खत्ते ॥ २ ॥ ( विशे. ३४०९ ) सन्ध्यागतं नाम यत्र नक्षत्रे सूर्योऽनन्तरं स्थास्यति तत्सन्ध्यागतं, अपरे पुनराहुः—यत्र रविस्तिष्ठति तस्माच्चतुर्दशं पञ्चदशं वा नक्षत्रं सन्ध्यागतमिति, रविगतं यत्र रविस्तिष्ठति, पूर्वद्वारिकेषु नक्षत्रेषु पूर्वदिशा गंतव्येऽपरया दिशा गच्छतो विड्डेरं, सग्रहं च—ग्रहाधिष्ठितं विलम्बि—यत् सूर्येण परिभुज्य मुक्तं राहुहतं—यत्र ग्रहणमभूत् ग्रहभिन्नं—ग्रहविदारितं, तथा प्रियधर्म्मादिगुणसम्पत्सु सतीषु तत् सामायिकं भवति दातव्यं, उक्तं च—"पियधम्मो दढधम्मो संविग्गोऽवज्जभीरु असढो अ । खंतो दंतो गुत्तो थिरवय जिइंदिओ उज्जू ॥ १ ॥" ( विशे. ३४१० ) विनीतस्याप्येते गुणा अन्वेष्टव्याः इति गाथार्थः ॥ अधुना चरमं द्वारं व्याचिख्यासुराह—

अभिवाहारो कालिअसुअस्स सुत्तत्थतदुभएणंति । दवगुणपज्जवेहि अ दिट्ठीवायम्मि बोद्धवो ॥ १८२ ॥ (भा.)

'अभिव्याहरणं' शिष्याचार्ययोर्वचनप्रतिवचने अभिव्याहारः, स च 'कालिकश्रुते' आचारादौ 'सुत्तत्थतदुभएणं'ति सूत्रतोऽर्थतः तदुभयतश्च, इयमत्र भावना—शिष्येण इच्छाकारेणेदमङ्गाद्युद्दिशतेत्युक्ते सति इच्छापुरःसरमाचार्यवचनं—अहमस्य साधोरिदमङ्गमध्ययनमुद्देशं वा उद्दिशामि, वाचयामीत्यर्थः, आप्तोपदेशपारम्पर्यख्यापनार्थं क्षमाश्रमणानां हस्तेन, न स्वोत्प्रेक्षया, सूत्रतोऽर्थतस्तदुभयतोऽस्मिन् कालिकश्रुते अ(त)थोत्कालिके, दृष्टिवादे कथमित्यत आह—द्रव्यगुणपर्यायैश्च

दृष्टिवादे-भूतवादे वोद्धव्योऽभिव्याहारः, एतदुक्तं भवति-शिष्यवचनानन्तरमाचार्यवचनमिदम्-उद्दिशामि सूत्रतोऽर्थतस्त-दुभयतो द्रव्यगुणपर्यायैरनन्तगमसहितैरिति, एवं गुरुणा समादिष्टेऽभिव्याहारे शिष्याभिव्याहारः-शिष्यो ब्रवीति-उद्दिष्ट-मिदं मम, इच्छाम्यनुशासनं क्रियमाणं पूज्यैरिति, एवमभिव्याहारद्वारमष्टमं नीतिविशेषे नये इति ॥ व्याख्याता प्रतिद्वा-रगाथा, साम्प्रतमधिकृतमूलगाथायामेव करणं कतिविधमित्येतत् द्वारं व्याचिख्यासुराह—

उद्देससमुद्देसो वायणमणुजाणणं च आयरिए । सीसंमि उद्दिसिज्जंतमाइ एअं तु जं कइहा ॥ १८३ ॥ (भा.)

गुरुशिष्ययोः सामायिकक्रियाव्यापारणं करणं, तच्चतुर्द्धा, तद्यथा-उद्देसकरणं समुद्देसकरणं वाचनाकरणमनुज्ञाकरणं च, छन्दोभङ्गभयादिह वाचनाकरणमेवमुपन्यस्तं, यावता तत्त्वतः अमुना क्रमेण द्रष्टव्यं-उद्देशो वाचना समुद्देशोऽनुज्ञा चेति गुरोर्व्यापारः, 'आयरिए'त्ति गुराविदं करणं, गुरुविषयमित्यर्थः, 'सीसंमि उद्दिसिज्जंतमादि' शिष्ये-शिष्यविषयं उद्दिश्यमानकरणं वाच्यमानकरणं समुद्दिश्यमानकरणमनुज्ञायमानकरणं चेति, 'एयं तु जं कइह'त्ति एतदेव चतुर्विधं तत् यदुक्तं कतिविधमिति, आह-पूर्वमनेकविधं नामादिकरणमभिहितमेव इह पुनः किमिति प्रश्नः ?, उच्यते, तत् पूर्वगृही-तस्य करणमनेकविधमुक्तं, इदं पुनरस्मिन् गुरुशिष्यदानग्रहणकाले चतुर्विधं करणमिति, पूर्वं वा करणमविशेषेणोक्तं, इह तु गुरुशिष्यक्रियाविशेषाद्विशेषितमिति न पुनरुक्तता, अथवा अयमेव करणस्यावसरः, पूर्वत्र पुनरनेकान्तद्योतनार्थं विन्यासः कृत इति 'विचित्रा सूत्रस्य कृतिरिति, कृतं विस्तरेण ॥ द्वारम् ॥ सम्प्रति कथमिति द्वारं विवरीषुराह—

कह सामाइयलंभो ? तस्सव्वविघाई देसघाई । देसविघाईफड्डग अणंतवुड्ढीविसुद्धस्स ॥ १०४१ ॥

एवं ककारलंभो सेसाणवि एवमेव कमलंभो । एअं तु भावकरणं करणे य भए य जं भणिअं ॥ १०४२ ॥

'कथं' केन प्रकारेण सामायिकस्य लाभ इति प्रश्नः, अत्रोत्तरं-तस्य-सामायिकस्य द्विविधानि स्पर्द्धकानि भवन्ति, यतः
सामायिकावरणं दर्शनावरणं मिथ्यात्वमोहनीयं च, अमीषां च द्विविधानि स्पर्द्धकानि भवन्ति-देशघातीनि सर्वघातीनि
च, तत्र सर्वघातिषु स्पर्द्धकेषु सर्वेष्वप्युद्घातितेषु सत्सु देशघातिष्वपि स्पर्द्धकेष्वनन्तेषूद्घातितेषु अनन्तगुणवृद्ध्या प्रति-
समयं विशुद्ध्यमानः शुभशुभतरपरिणामो भावतः ककारं लभते, तदनन्तगुणवृद्ध्यैव प्रतिसमयं विशुद्ध्यमानः सन् रेफं,
एवं शेषाण्यप्यक्षराणि, अत एवाह-देशविघातिस्पर्द्धकानन्तवृद्ध्या विशुद्धस्य सतः । (ततः) किं ? 'एवं' उक्तप्रकारेण लाभः
शेषाणामपि रेफादीनामक्षराणाम्, एवमेव-उक्तप्रकारेण क्रमेण सूत्रगतपरिपाट्या लाभः, आह-उपक्रमद्वारेऽभिहितमेतत्-
क्षयोपशमात् जायते, पुनरुपोद्घातेऽभिहितं-कथं लभ्यते इति, तत्रोक्तं, इह किमर्थं प्रश्न इति पुनरुक्तता ?, उच्यते, त्रय-
मप्येतदपुनरुक्तम्, यत उपक्रमे क्षयोपशमात् सामायिकं लभ्यते इत्युक्तं, उपोद्घाते स एव क्षयोपशमस्तत्कारणभूतः कथं
लभ्यत इति प्रश्नः, इह केषां पुनः कर्म्मणां स क्षयोपशम इति प्रत्यासन्नतरकारणप्रश्न इत्यपुनरुक्तत्वमित्यलं प्रसङ्गेन, द्वार-
मेवोपसंहरन्नाह-एतदेवानन्तरोदितं यत्सामायिककरणं तद् भावकरणं, एवं च मूलद्वारगाथायां 'करणे भए य' इत्युल्लेखेन
यत्करणमिति द्वारमुपन्यस्तं तद् व्याख्यातं, एतद्व्याख्यानाच्च सूत्रेऽपि करोमीत्यवयवो व्याख्यातः, अधुना भय इति
द्वितीयद्वारव्याख्यानार्थमाह—

होइ भयंतो भवअंतगो य रयणा भयस्स छब्भेया । सवंमि वण्णिएऽणुक्कमेण अंतेऽवि छब्भेया ॥ १८४ ॥ (भा.)

भवति भदन्त इति, 'भदुङ् कल्याणे सुखे च' अस्मादौणादिकोऽन्तप्रत्ययः, आणादिकत्वादेव नमालोपः, भदन्तः—कल्याणः सुखश्चेत्यर्थः, प्राकृतत्वादामन्त्रणे 'भन्ते' इति भवति, अथवा प्राकृतशैल्या भवान्त इति द्रष्टव्यं, तत्र भवस्य—संसारस्यान्तस्तेनाचार्येण क्रियते इति भवान्तकरत्वाद् भवान्तः, अथवा भयान्त इति द्रष्टव्यं, तत्र भयं—त्रासः, तमाचार्यं प्राप्य भयस्यान्तो भवतीति भयांतभवनात् भयान्तो—गुरुः, यद्वा अन्तं करोतीत्यन्तकः भयस्यान्तको भयान्तकः तस्य सम्बोधनं, उभयत्रापि प्राकृतत्वात् भन्ते इति भवति, तत्र रचना—(नामादि)विन्यासलक्षणा भयस्य षड्भेदा—षट्प्रकारा, नामस्थापनाद्रव्यक्षेत्रकालभावभेदभिन्ना, तत्र नामस्थापने सुगमे, द्रव्यक्षेत्रकालभयान्यपि प्रतीतानि, द्रव्याद्भयं द्रव्यभयमित्येवं सर्वत्र पञ्चमीतत्पुरुषसमाश्रयणात्, अन्यथा वा यथायोगं भावनीयं, भावभयं सप्तधा—इहलोकभयं परलोकभयं आदानभयमाकस्मिकभयं आजीविकाभयं अश्लोकभयं मरणभयं चेति, तत्र यत् स्वभवात्प्राप्यते यथा मनुष्यस्य मनुष्यात् तिरश्चः तिर्यग्भ्य इत्यादि तदिहलोकभयं, यत् परभवादेवाप्यते, यथा मनुष्यस्य तिरश्चः तिरश्चो मनुष्यात् तत्परलोकभयं, किञ्चन द्रव्यजातमादानं तस्य नाशहरणादिभ्यो भयं आदानभयं, यद् बाह्यनिमित्तमन्तरेणाहेतुकं भयमुपजायते तदकस्माद्भवतीत्याकस्मिकं, तथा 'श्लोकृङ् श्लाघायां' श्लोकः—प्रशंसा श्लाघा तद्विपर्ययोऽश्लोकः तस्माद्भयं अश्लोकभयं, आजीविका—आजीवनं तस्या उच्छेदेन भयमाजीविकाभयं, प्राणपरित्यागभयं मरणभयं, एवं अनुक्रमेणोक्तलक्षणेन सर्वस्मिन् वर्णितेऽन्तेऽपि षड् भेदा वर्णयितव्याः, तद्यथा—नामान्तः स्थापनान्तो द्रव्यान्तः क्षेत्रान्तः कालान्तो भावा-

न्तश्च, तत्र नामस्थापने प्रतीते, द्रव्यान्तो घटाद्यन्तः, क्षेत्रान्त ऊर्ध्वलोकादिक्षेत्रान्तः, कालान्तः समयाद्यन्तो, भावान्तो औदयिकादिभावान्तः ॥

**एवं सव्वंमिवि वन्नियंमि एत्थं तु होइ अहिगारो । सत्तभयविप्पमुक्के तहा भवंते भयंते य ॥ १८९ ॥ (भा.)**

एवम्-उक्तेन प्रकारेण सर्वस्मिन्ननेकभेदभिन्ने भयादौ वर्णिते सति अत्र प्रकृते भवत्यधिकारः सप्तभयविप्रमुक्तो यस्तेन, तथा यो भवान्तो यश्च भदन्तस्ताभ्यामिति, पश्चानुपूर्व्या ग्रन्थ इत्यदोषः ॥ व्याख्यातं मूलद्वारगाथायां (भयान्तेति) द्वार-द्वयं, तद्व्याख्यानाच्च भदन्त भवान्त भयान्त इति गुर्वामन्त्रणार्थः सूत्रावयवः, अथ सामायिकस्यादावेव गुरोरामन्त्र-णवचः किमर्थं ?, उच्यते, गुरुकुलवासोपसंग्रहार्थं, यथा सर्वदैव हि शिष्यो गुणार्थी सन् गुरुकुलवासी भवेत्, गुरुकुल-वासे वसतां प्रतिक्षणं ज्ञानादिगुणोत्सर्प्पणात्, उक्तं च भाष्यकृता-आमंतेइ करेमी भंते ! सामाइयंति सीसो य । आहा-मंतणवयणं गुरुणो किं कारणमियंति ? ॥ १ ॥ भन्नइ गुरुकुलवासोवसंगहत्थं जहा गुणत्थी हि । निच्चं गुरुकुलवासी हवेज्ज सीसो जतोऽभिहियं ॥ २ ॥ नाणस्स होइ भागी थिरयरतो दंसणे चरित्ते य । धन्ना आवकहाए गुरुकुलवासं न मुंचंति ॥ ३ ॥ ( विशे. ३४५७-८-९ ) अन्यच्च-सामायिकस्यादौ गुर्वामन्त्रणवचनमभिदधान एवं ज्ञापयति-सर्वकालं प्रतिक्रमणं गुरुपादमूले कर्त्तव्यं, वसत्यन्तरेऽपि पृथक् कारणवशतः स वस्तुकामो गुरुपादमूले प्रतिक्रम्य वसति, तथा च कल्पाध्ययनोक्ता एवं सामाचारी-"यदि लघ्वी वसतिः ततोऽन्यत्र कतिपये साधवः संवस्तुकामा आचार्यसमीपे प्रतिक्रम्य प्रादोषिककालग्रहणोत्तरकालं सूत्रपौरुषीमर्थपौरुषीं च कृत्वा अन्यस्यां वसतौ गच्छन्ति, अथान्तरा श्वापदादिभयं

आमंत्रण-प्रयोजनं

ततः अर्थपौरुषीं हापयन्ति, ततः सूत्रपौरुषीमपि, कालमपि, तथा चरमं कायोत्सर्गं द्वितीयमाद्यं यावत्तिष्ठत्यपि सहस्ररश्मौ तत्र यान्ती"ति, तथेदमपि ज्ञापयति–सर्वाणि कार्याणि गुरूनापृच्छ्य कर्त्तव्यानि, नान्यथा, सामायिकप्रतिपत्तेरपि गुर्वामन्त्रणपूर्वकत्वात्, उक्तं च–"आवस्सयंपि निच्चं गुरुपामूलंमि देसियं होइ। वीसुंपि संवसंता कारणतो जइवि सेज्जाए ॥ १ ॥ एवं चिय सवावस्सयाइं आपुच्छिऊण कज्जाइं। जाणावियमामंतणवयणातो जेण सवेसिं ॥ २ ॥ सामाइयमादि मयं भदंतसद्दो य जं तदादीए। तेणाणुवत्तइ ततो करेमि भन्तेत्ति सवेसु ॥ ३ ॥ (विशे. ३४६१–२–३) अथ किमिति गुरूनापृच्छ्यैव सर्वाणि कार्याणि कर्त्तव्यानीति चेत्, उच्यते, इह परमार्थतः कृत्यमकृत्यं वा गुरवो जानते, विनयप्रतिपत्तिश्च शिष्येण कृता भवति, भगवदाज्ञा चाराधिता स्यात्, तथाहि–भगवतामियमाज्ञा–उच्छ्वासादि प्रमुच्य शेषं गुर्वनापृच्छया न किमपि कर्त्तव्यमिति, उक्तं च–"किच्चाकिच्चं गुरवो विदंति विणयपडिवत्तिहेउंति। उस्सासाइ पमोत्तुं तदणापुच्छाए पडिसिद्धं ॥ १ ॥" (विशे. ३४६४) अथ यत्र गुरुर्न भवति तत्र कथं कर्त्तव्यमिति चेत्, प्रतिसमाहितमत्र भाष्यकारेण–"गुरुविरहंमि य ठवणा गुरूवएसोवदंसणत्थं च। जिणविरहंमिव जिणबिंब सेवणामंतणं सफलं ॥ १ ॥ रन्नो व परोक्खस्सवि जह सेवा मंतदेवयाए वा। तह चेव परोक्खस्सवि गुरुणो सेवा विणयहेउं ॥ २ ॥" (विशे. ३४६५–६) इति कृतं विस्तरेण ॥ सम्प्रति सामायिकं व्याख्येयं, अथ सामायिकमिति कः शब्दार्थः ?, उच्यते–समो रागद्वेषरहितः, अयनं गमनं, समस्यायः समायः, अयनग्रहणं शेषक्रियाणामुपलक्षणं, सर्वासामपि साधुक्रियाणां समस्य सतस्तत्त्वतो भावात्, समाय एव सामायिकं, अथवा समानि–ज्ञानदर्शनचारित्राणि तेष्वयनं समायः स एव सामायिकं, यद्वा सर्वजीवेषु

मैत्री साम, साम्न आयो—लाभः सामायः स एव सामायिकं, अथवा सम्यक्शब्दार्थः समशब्दः, सम्यगयनं—वर्त्तनं समयः, अथवा सम्यगायो—लाभः समायः, यद्विवा समस्य भावः साम्यं, तस्यायः साम्यायः, सर्वत्र स्वार्थिक इकण् प्रत्ययः, पृषोदरादित्वादिष्टरूपनिष्पत्तिः, अथवा अन्यथा निरुक्तविधिः, तमुपदर्शयति—

सामं समं च सम्मं इगमिति सामाइअस्स एगट्ठा । नामं ठवणादविए भावम्मि य तस्स निक्खेवो ॥ १०४३ ॥

इह सामायिकशब्दः पदद्वयनिष्पन्नः, तत्र आद्यं पदं त्रिधा, तद्यथा—सामं समं च सम्यक्, इकमिति द्वितीयं पदं, तच्च देशीपदं क्वापि प्रवेशार्थे प्रवर्त्तते, अत्र पदयोजनां स्वयमेवाग्रे वक्ष्यति, तथा सामायिकस्य एकार्थिकानि वक्तव्यानि। सम्प्रति सामादिशब्दानां निक्षेपप्रदर्शनायाह—'नामे' त्यादि, तेषां सामप्रभृतीनां शब्दानां निक्षेपः कर्त्तव्यः, तद्यथा—'नामस्थापने द्रव्ये भावे च' इयमत्र भावना—चतुर्विधं साम, तद्यथा—नामसाम स्थापनासाम द्रव्यसाम भावसाम च, एवं समसम्यक्पदयोरपि भावनीयं ॥ तत्र नामस्थापने प्रतीते, द्रव्यसामप्रभृतीन् प्रतिपादयति—

महुरपरिणाम सामं समं तुला सम्म खीरखंडजुई । दोरे हारस्स चिई इगमेयाइं तु दवंमि ॥ १०४४ ॥

ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यसाम मधुरपरिणामं शर्करादिद्रव्यं, द्रव्यसमं सद्भूतार्थालोचनया तुलाद्रव्यं, द्रव्यसम्यक् क्षीरखंडयुतिः—क्षीरखण्डयोजनं; इकमपि चतुर्द्धा, तद्यथा—नामेकं स्थापनेकं द्रव्येकं भावेकं च, तत्र नामस्थापने प्रतीते, द्रव्येकं दोरे इति सूत्रदवरके मौक्तिकान्यधिकृत्य भाविपर्यायापेक्षया हारस्य—मुक्ताफलकलापस्य चितिः—चयनं

तथाहि—अन्यत्वे सामायिकवतोऽपि तत्फलस्य मोक्षस्याभावः, तदन्यत्वात्, मिथ्यादृष्टेरिव, अनन्यत्वे तस्योत्पत्तिविनाशा-भ्यामात्मनोऽप्युत्पत्तिविनाशप्रसङ्गः, अनिष्टं चैतत्, तस्यानादिमत्त्वाभ्युपगमात्, एष आक्षेपः—चालना। इत्थं चालनाम-भिधाय साम्प्रतं प्रत्यवस्थानमाह—

आया हु कारओ मे सामाइअ कम्म करणमाया य। परिणामे सइ आया सामाइअमेव उ पसिद्धी ॥ १०४८ ॥

इह ममात्मैव कारको मतः, तस्य स्वातन्त्र्येण प्रवृत्तेः, तथा सामायिकं कर्म, तद्गुणत्वात्, करणमपि चोदे-शादिलक्षणं तद्रूपत्वादात्मैव, तथापि यथोक्तदोषाणामसम्भवः, कुत इत्याह—यस्मात् परिणामे सति आत्मा सामायिकं परिणमनं परिणामः—कथञ्चित् पूर्वरूपापरित्यागेनोत्तररूपापत्तिः, उक्तं च—"नार्थान्तरगमो यस्मात्, सर्वथैव न चागमः। परिणामः प्रमासिद्धः, इष्टश्च खलु पण्डितैः ॥ १ ॥" तस्मिन् परिणामे सति आत्मा सामायिकमुपपद्यते, तथाहि—परिणामे सति तस्यात्मनो नित्यानित्याद्यनेकरूपता, अन्यथा परिणामित्वायोगात्, सा च नित्यानित्याद्यनेकरूपता द्रव्यगुणपर्या-याणां भेदाभेदसिद्धौ, अन्यथा सकलव्यवहारोच्छेदप्रसङ्गात्, ततो नात्र कर्तृकर्मकरणानामेकान्तेन अन्यत्वं, तद्गुणत्वात्, न खलु गुणगुणिनोरेकान्तेन भेदः, तथा सति विप्रकृष्टगुणमात्रोपलब्धौ प्रतिनियतगुणिविषयसंशयायोगात्, तदन्येभ्योऽपि तस्य भेदाविशेषाद्, अथ च यदा कश्चिद्धरिततशाखाविसररन्ध्रोदरान्तरतः किमपि शुक्लं पश्यति तदा किमियं पताका किं वा बलाका? इति दृश्यते प्रतिनियतगुणिविषयः संशयः, नाप्येकान्तेनानन्यत्वं, तद्गुणत्वादेव, नहि गुणगुणिनोरेका-न्तेनानन्यत्वं, तद्गुणत्वादेव, नहि गुणगुणिनोरेकान्तेनाभेदोऽपि, तथा सति गुणग्रहणे सति गुणिविषयसंशयानुत्पत्तिरेव,

गुणग्रहण एव तस्यापि गृहीतत्वात्, किंतु जात्यन्तरात्मकमन्यत्वानन्यत्वं घटते, आत्मैव कारकः आत्मैव सामायिकं आत्मैव करणमिति प्रसिद्धिः–प्रत्यवस्थानं ॥ संप्रति परिणामपक्षे सत्यप्येकत्वेऽप्यनेकत्वेऽपि चाविरोधेन कर्तृकर्म्मकरणव्यवस्था घटते इति दर्शयन्नाह—

एगत्ते जह मुट्ठिं करेइ अत्थंतरे घडाईणि । दव्वत्थंतरभावे गुणस्स किं केण सम्बद्धं ? ॥ १०४९ ॥

एकत्वे–कर्तृकरणानामभेदे दृष्टः कर्तृकरणभावो, यथा मुष्टिं करोति, अत्र हि देवदत्तः कर्त्ता, तस्य हस्तः कर्म, तस्यैव प्रयत्नविशेषः करणमिति । तथाऽर्थान्तरे–कर्तृकरणानां भेदे दृष्टः कर्तृकर्म्मकरणभावो, यथा घटादीनि करोति, अत्र हि कुलालः कर्ता घटादिकं कर्म्म दण्डादिकं करणमिति, इह सामायिकमात्मनो गुणो वर्त्तते, स च गुणिनः कथञ्चिदेव भिन्नः, अत्रैव विपक्षे बाधामुपदर्शयति–द्रव्यात् सकाशाद् गुणिन इत्यर्थः, एकान्तेनैवार्थान्तरभावे–भेदे सति गुणस्य किं केन सम्बद्धं ?, न किञ्चित् केनचित्सम्बद्धमिति भावः, तथा च सति ज्ञानादीनामपि गुणत्वात् तेषामपि चात्मादिगुणिभ्य एकान्तभिन्नत्वात् संवेदनाभावतः सर्वव्यवस्थानुपपत्तिः, एवमेकान्तेनानर्थान्तरभावेऽपि दोषा अभ्यूह्या इति, गुणगुणिनोरर्थान्तरत्वात् सर्वं सुस्थमिति । तदेवमुक्ते कण्ठतश्चालनाप्रत्यवस्थाने, सम्प्रति 'सर्वं सावद्यं योग'मित्यत्र यः सर्वशब्दस्तन्निरूपणायाह—

नामंठवणादविए आएसे निरवसेसए चेव । तह सव्वधत्तसव्वं च भावसव्वं च सत्तमयं ॥ १०५० ॥

नामसर्वं स्थापनासर्वं द्रव्यसर्वं आदेशसर्वं निरवशेषसर्वं सर्वधत्तसर्वं ध्रियते इति सर्वः, तस्य सप्तधा निक्षेपस्तद्यथा–

प्रवेशनं द्रव्येकं, अत एवाह–'एयाइं तु दव्वंमि' एतान्युदाहरणानि द्रव्ये–द्रव्यविषयाणि ॥ साम्प्रतं भावसामादिप्रतिपादनार्थमाह—

आयोवमाए परदुक्खमकरणं रागदोसमज्झत्थं । नाणाइतिगं तस्सायपोअणं भावसामाई ॥ १०४५ ॥

आत्मोपमानेन परदुःखाकरणं, मकारोऽलाक्षणिकः, भावसामेति गम्यते, किमुक्तं भवति ?–आत्मनीव परदुःखाकरणपरिणामो भावसाम, तथा रागद्वेषमाध्यस्थ्यं, अनासेवनया रागद्वेषमध्यवर्त्तित्वं, सर्वत्रात्मनस्तुल्यरूपेण वर्त्तनं भावसमं, तथा ज्ञानादित्रयं–ज्ञानदर्शनचारित्ररूपमेकत्रावस्थितं भावसम्यक्, तथाहि–ज्ञानदर्शनचारित्रयोजनं भावसम्यगेव, मोक्षसाधकत्वात्, 'तस्ये'ति सामादि सम्बध्यते, तस्य सामादेरात्मप्रोतनं–आत्मनि प्रवेशनं भावे, क्रमत एवाह–भावसामादीनि प्रतिपत्तव्यानि । सम्प्रति निरुक्तिविधियोजना क्रियते, आत्मन्येव साम्न इकं–प्रवेशनं सामायिकं, यल्लक्षणेनानुपपन्नं तत्सर्वं नैरुक्तिनिपातनादवसेयं, तथाहि–सामन्शब्दनकारस्य आयआदेशः, तथा समस्य–रागद्वेषमध्यस्थस्यात्मनि इकं–प्रवेशनं सामायिकं, समशब्दात्परः अयागमः सकारस्य च दीर्घता, तथा सम्यगित्येतस्य सम्यग्ज्ञानदर्शनचारित्रयोजनरूपस्यात्मनि इकं–प्रवेशनं सामायिकं यकारादेरायादेशनिपातनं सकारस्य च दीर्घता ॥ सम्प्रति सामायिकपर्यायशब्दान् प्रतिपादयति—

समया संमत्त पसत्थ संति सिव हिअ सुहं अणिंदं च । अदुगुंछिअमगरहियं अणवज्जमिमेऽवि एगट्ठा ॥१०४६॥

समता रागद्वेषमध्यवर्त्तिनस्तद्रूपत्वात्, सम्यक्त्वं ज्ञानदर्शनचारित्राणां परस्परं यत् प्रयोजनं तदात्मकत्वात्, प्रशस्तं

मोक्षसाधकत्वात्, शान्तिः मिथ्यात्वादिदावानलविध्यापनात्, शिवमुपद्रवकारित्वाभावात्, हितं परिणामसुखावहत्वात्, शुभं शुभाध्यवसायात्मकत्वात्, अजुगुप्सितं स्वरूपतः प्रशमरूपतया जुगुप्सनीयाभावात्, अगर्हितं परममुनिभिरपि महापुरुषैः सेवितत्वात्, अनवद्यं सावद्ययोगप्रत्याख्यानात्मकत्वात्, 'इमेऽवि एगट्ठे'ति इमे-अनन्तरोदिता अपि, अनन्तरोदितं 'सामाइय'मित्यादय इत्यपिशब्दार्थः, एकार्थिकाः पर्यायशब्दाः ॥ आह-ननु निरुक्तद्वार एव 'सामाइयं समइय'मित्यादयो यदि पर्यायशब्दा उक्ताः ततो भूयः किमर्थमेतेषामभिधानमिति ?, उच्यते, तत्र पर्यायशब्दमात्रता, इह तु वाक्यान्तरेणार्थनिरूपणमित्यदोषः, अथवा तत्रोक्तावप्यत्राभिधानमसम्मोहार्थमदुष्टमेव, अत एवोक्तं-'इमेऽवि एगट्ठा' इति, एतेऽपि तेऽपि इति ॥ सम्प्रति कण्ठतः स्वयमेव चालनां प्रतिपादयति—

को कारओ ? करिंतो, किं कम्मं ?, जं तु कीरई तेण। किं कारय-करणाण य अन्नमणन्नं च ? अक्खेवो ॥१०४७॥

इह 'करोमि भदन्त ! सामायिक'मित्यत्र कर्तृकर्मकरणव्यवस्था कर्त्तव्या, यथा 'करोमि राजन् ! घटक'मित्युक्ते कुलालः कर्त्ता घटः कर्म्म दण्डादि करणमिति, अत्र कः कारकः कुलालस्थानीयः ?, अत्राह-'करिंतो'त्ति, तत् सामायिकं कुर्वन् आत्मैव कारकः, अथ किं कर्म्म घटस्थानीयं ?, अत्राह-यत्तु क्रियते-निर्वर्त्यते तेन कर्त्रा, तच्च तद्गुणरूपं सामायिकमेव, तुशब्दः करणप्रश्ननिर्वचनसङ्ग्रहणार्थः, तत्र किं करणं ? दण्डादिस्थानीयमिति प्रश्नः, निर्वचनमुद्देशादि चतुर्विधं, तद्यथा-उद्देशो वाचना समुद्देशः अनुज्ञा चेति, एवं व्यवस्थिते सत्याह-'किं कारगकरणाण य' इति किं कारककरणयोः चशब्दात् कर्म्मणश्च परस्परतः कुलालघटदण्डादीनामिवान्यत्वमाहोश्विदनन्यत्वं ?, किंचातः?, उभयथापि दोषः,

भावसर्वं च सप्तमं, एष गाथासमासार्थः, व्यासार्थं तु भाष्यकारः स्वयमेव वक्ष्यति, तत्र नामस्थापने क्षुण्णत्वादनादृत्य शेषभेदव्याख्यानार्थमाह—

दविए चउरो भंगा सवमसवे य दवदेसे य । आएस सवगामे नीसेसे सवगं दुविहं ॥ १८९ ॥ (भा.)

द्रव्ये–द्रव्यसर्वे चत्वारो भङ्गाः, तानेव सूचयति–'सवमसवे य दवदेसे य'त्ति इह अङ्गुल्यादिद्रव्यं यदा सर्वैरपि निजावयवैः परिपूर्णं विवक्ष्यते तदा सर्वमुच्यते, एवं तस्यैवाङ्गुल्यादिद्रव्यस्य कश्चित् स्वावयवो देशो निजावयवपरिपूर्णतया यदा सकलो विवक्ष्यते तदा सोऽपि देशः सर्व एव, उभयस्मिन्–द्रव्ये तद्देशे च सर्वत्वं, एतदेवाङ्गुल्यादिद्रव्यं तद्देशो वा यथास्वमपरिपूर्णतया विवक्ष्यते तदा प्रत्येकमसर्वत्वं, ततो द्रव्ये देशे चैवं विवक्षिते चत्वारो भङ्गाः, तद्यथा–द्रव्यं सर्वं देशोऽपि सर्वः १, द्रव्यं सर्वं देशोऽसर्वः २, देशः सर्वो द्रव्यमसर्वं ३, देशोऽसर्वो द्रव्यमप्यसर्वं ४, अत्र यथाक्रममुदाहरणम्–अंगुलिद्रव्यं संपूर्णं विवक्षितं द्रव्यसर्वं, तदेव देशोनं विवक्षितं द्रव्यासर्वं, पर्व पुनः सम्पूर्णं विवक्षितं देशसर्वं, पर्वैकदेशस्तु देशासर्वं, तथा आदेश–उपचारः, स च बहुतरे प्रधाने वा देशेऽपि आदिश्येत, तत्र बहुतरे यथा विवक्षितं घृतमभिवीक्ष्य बहुतरे भुक्ते स्तोकेऽवशेषे सर्वशब्दोपचारः क्रियते–सर्वं घृतं भुक्तमिति, प्रधानेऽप्युपचारो यथा ग्रामप्रधानेषु नरेषु गतेषु सर्वो ग्रामो गतः, उक्तं च–"आदेसो उवयारो बहुतरगे वा पहाणतरगे वा । देसेऽवि जहा सवं भुत्तं सवो गतो गामो ॥ १ ॥" ( विशे. २४८८ ) इति, तत्र प्रधानपक्षमधिकृत्याह–'आदेस सवगामो' इति, आदेशसर्वं सर्वो

ग्रामो गत इति आयात इति वा क्रिया । उक्तमादेशसर्वमथ निरवशेषसर्वमाह–'निस्सेसे सव्वगं दुविहं'ति निरवशेषसर्वं द्विविधं–द्विप्रकारं, तद्यथा–सर्वापरिशेषसर्वं तद्देशापरिशेषसर्वं च, तत्र—

अणिमिसिणो सव्वसुरा सव्वापरिसेससव्वगं एअं । तद्देसापरिसेसं सव्वे काला जहा असुरा ॥ १८७ ॥ (भा.)

अनिमेषिणः अनिमेषनयनाः सर्वसुराः, एतत्सर्वापरिशेषसर्वं, न कश्चित् देवानां मध्येऽनिमिषत्वं व्यभिचरतीति, तद्देशापरिशेषसर्वं यथा सर्वे काला असुरा इति, इयमत्र भावना–तेषामेव देवानां देश एको निकायोऽसुरः, ते च सर्वं एवासितवर्णा इति । सर्वधत्तासर्वप्रतिपादनायाह—

सा हवइ सव्वधत्ता दुपडोआरा जिया य अजिया य । दव्वे सव्वघडाई सव्वधत्ता पुणो कसिणं ॥ १८८ ॥ (भा.)

सा भवति 'सर्वधत्ते'ति सर्वं जीवाजीवाख्यं वस्तु धत्तं–निहितं यस्यां विवक्षायां सा सर्वधत्ता, ननु ददातेर्हिंशब्दादेशात् हितमिति भवितव्यं, कथं धत्तमिति ?, उच्यते, पृषोदरादितया शब्दान्तरत्वेनाविरोधाददोषः, अथवा धत्त इति डित्थवत् अव्युत्पन्न एव, यथा शब्दः, यदिवा–सर्वं दधातीति सर्वधं, एतन्निरवशेषवचनं, सर्वधमात्तं–निगृहीतं यस्यां विवक्षायां सा सर्वधात्ता, अत्र निष्ठांतस्य परनिपातः सुखादिदर्शनात्, अथवा सर्वधमात्ता सर्वधात्ता तया यत् सर्वं तत्सर्वधात्तासर्वं, सा भवति सर्वधात्ता, यथा द्विप्रत्यवताराः सर्वे पदार्थास्तद्यथा–जीवाश्च अजीवाश्च, तथाहि–यत्किञ्चनेह लोके समस्ति तत्सर्वं जीवाश्च अजीवाश्च, नैतद्व्यतिरिक्तमस्ति, अत्राह–ननु द्रव्यसर्वस्य सर्वधात्तासर्वस्य च कः प्रतिविशेषः ?, अयमत्राभिप्रायः–द्रव्यसर्वमपि विवक्षया अशेषद्रव्यविषयं भवतीति, तत आह–'दव्वे सव्वघडादी' इह द्रव्यसर्वे घटादयो

गृह्यंते, आदिशब्दादङ्गुल्यादिपरिग्रहः, सर्वघत्ता पुनः समस्तवस्तुजातं व्याप्य व्यवस्थितेति विशेषः ॥ अथ भावसर्वमाह—

भावे सब्बोदइओदयलक्खणओ जहेव तह सेसा । इत्थ उ खओवसमिए अहिगारोऽसेससब्वे य ॥१८९॥ (भा.)

भावे इति द्वारपरामर्शः, सर्वः शुभाशुभभेदेन द्विप्रकारोऽपि उदयलक्षणः—कर्मोदयनिष्पन्नत्वरूप औदयिकः, यथाऽयमुक्तः तथा शेषा अपि, स्वलक्षणतो वाच्या इति वाक्यशेषः, तद्यथा—मोहनीयकर्मोपशमस्वभावः शुभः सर्व एवौपशमिको भावः, कर्मक्षयस्वभावः पुनः शुभः सर्वः क्षायिकः, कर्मक्षयोपशमनिष्पन्नः शुभाशुभः सर्वक्षायोपशमिकः, द्रव्यपरिणतिस्वभावः सर्वः परिणामः, एवं शिष्यमतिव्युत्पादनार्थं प्ररूपणां कृत्वा प्रकृतयोजनामुपदर्शयति—'एत्थ तु' इत्यादि, अत्र क्षायोपशमिकभावसर्वेऽधिकारः—अवतारः उपयोगोऽशेषसर्वे च—निरवशेषसर्वे च ॥ व्याख्यातः सौत्रः सर्वावयवः, साम्प्रतं सावद्यावयवव्याख्यानार्थमाह—

कम्ममवज्जं जं गरहिअंति कोहाइणो व चत्तारि । सह तेण जो उ जोगो पच्चक्खाणं हवइ तस्स ॥ १०५१ ॥

कर्म्म अनुष्ठानमवद्यं भण्यते, किमविशेषेण ?, नेत्याह—यद् गर्हितं—निंद्यं, अथवा क्रोधादयश्चत्वारोऽवद्यं, तेषां सर्वावद्यहेतुतया कारणे कार्योपचारात्. सह तेनावद्येन यो योगो—व्यापारस्तस्य सावद्ययोगस्य प्रत्याख्यानं—निषेधलक्षणं भवति, पाठान्तरं 'कम्मं वज्जं जं गरहियं'ति, तत्र 'वृजी वर्जने' वृज्यते इति वर्ज्यं, वर्ज्यं वर्जनीयं, त्यजनीयमित्यर्थः, शेषं पूर्ववत्, नवरं सह वर्ज्येन सवर्ज्यः, प्राकृतत्वात् सकारस्य दीर्घत्वे सावद्येति भवति । अधुना योगोऽभिधातव्यः, स च द्विधा—द्रव्ययोगो भावयोगश्च, तथा चाह—

दव्वे मणवइकाए जोगा दव्वा दुहा उ भावंमि । जोगो सम्मत्ताई पसत्थ इयरो य विवरीओ ॥ १०५२ ॥

द्रव्य इति द्वारपरामर्शः 'मणवइकाए जोग्गा दव्वा' इति मनोवाक्काययोग्यानि द्रव्याणि द्रव्ययोगः, इयमत्र भावना-जीवेनागृहीतानि गृहीतानि वा स्वव्यापाराप्रवृत्तानि द्रव्ययोग इति, द्रव्याणां वा हरीतक्यादीनां योगो द्रव्ययोगः, 'दुहा उ भावंमि'त्ति द्विधैव तुशब्दस्य एवकारार्थत्वात् द्विप्रकार एव, भावे भावविषयो योगः, तद्यथा-प्रशस्तोऽप्रशस्तश्च, तत्र प्रशस्तः सम्यक्त्वादिः, आदिशब्दात् ज्ञानचरणपरिग्रहः, प्रशस्तता चास्य युज्यते अनेनात्माऽपवर्गेणेत्यन्वर्थबलात्, इतरो-मिथ्यात्वादियोगो विपरीतः-अप्रशस्तः, युज्यतेऽनेनात्मा अष्टविधेन कर्म्मणेति व्युत्पत्तिभावात् । तदेवं सावद्ययोगमिति सूत्रावयवौ व्यख्यातौ । सम्प्रति प्रत्याख्यामीत्यवयवप्रस्तावात् प्रत्याख्यानं निरूपणीयं, 'पच्चक्खामी'त्यस्य संस्कारः प्रत्याख्यामि प्रत्याचक्षे इति वा, तत्र प्रत्याख्यामीति कोऽर्थः ?, प्रतीपमभिमुखं ख्यापनं सावद्ययोगस्य करोमि, तथा प्रत्याचक्षे इति कोऽर्थः ?, प्रतिषेधस्यादरेणाभिधानं करोमि प्रत्याख्यानं, प्रतिषेधस्याख्यानं प्रत्याख्यानं निवृत्तिरित्यर्थः, तन्निक्षेपप्ररूपणार्थमाह—

नामंठवणादविए खित्तमइच्छा अ भावओ तं च । नामाभिहाणमुत्तं ठवणाऽऽगारक्खनिक्खेवो [1] ॥ १ ॥

तच्च प्रत्याख्यानं षोढा, तद्यथा-नामप्रत्याख्यानं स्थापनाप्रत्याख्यानं द्रव्यप्रत्याख्यानं क्षेत्रप्रत्याख्यानं अदित्साप्रत्या-



१ गाथेयं क्वचित् हारिभद्रीयादर्शेऽपि, मूलस्थानं तु प्रत्याख्याननिर्युक्तौ, न श्रीहरिभद्रसूरिभिर्मतेयमत्र ।

ख्यानं भावप्रत्याख्यानं च, तत्र नामप्रत्याख्यानं प्रत्याख्यानमित्यभिधानमुक्तं, यद्वा यस्य प्रत्याख्यानमिति नाम स नामनामवतोरभेदोपचात् नामप्रत्याख्यानं, स्थापनाप्रत्याख्यानम् आगारक्खनिक्खेवो इति, आकारोऽनिक्षेपश्च, अक्षग्रहणमन्येषामपि निराकाराणामुपलक्षणं, इयमत्र भावना–चित्रकर्म्मादौ प्रत्याख्यानं कुर्वतो या स्थापना सा प्रत्याख्यानप्रत्याख्यानवतोरभेदोपचारात् स्थापनाप्रत्याख्यानं आकारवत्, अक्षवराटकादौ स्थापना निराकारं स्थापनाप्रत्याख्यानं ॥ सम्प्रति द्रव्यप्रत्याख्यानादिप्रतिपादनार्थमाह—

दव्वम्मि निण्हगाई निव्विसयाई अ हुंति खित्तम्मि । भिक्खाईणमदाणे अइच्छ भावे पुणो दुविहं ॥ १०५३ ॥

द्रव्ये द्रव्यविषयं प्रत्याख्यानं निह्नवः, आदिशब्दात् द्रव्यस्य द्रव्ययोर्द्रव्याणां द्रव्यभूतस्य द्रव्यहेतोर्वा प्रत्याख्यानं, 'निव्विसयाई य होन्ति खित्तम्मि' निर्विषयादि भवति प्रत्याख्यानं क्षेत्रे, तत्र यो निर्विषय आदिष्टस्तस्य क्षेत्रप्रत्याख्यानं, आदिशब्दान्नगरादिप्रतिषिद्धपरिग्रहः, तथा भिक्षादीनां भिक्षणं भिक्षा–प्राभृतिका, आदिशब्दाद्वस्त्रादिपरिग्रहः, तेषामदाने अतिगच्छेति अदित्सेति वा वचनं, अतिगच्छप्रत्याख्यानमदित्साप्रत्याख्यानं वा, भावे भावविषयं पुनर्द्विविधं प्रत्याख्यानं, भावप्रत्याख्यानमित्यत्र चैवं व्युत्पत्तिः, भावस्य–सावद्ययोगस्य प्रत्याख्यानं भावप्रत्याख्यानं, भावतो वा शुभात् परिणामात् प्रत्याख्यानं भाव एव वा सावद्ययोगविरतिलक्षणः प्रत्याख्यानं भावप्रत्याख्यानं ॥ सम्प्रति द्वैविध्यमेवोपदर्शयति—

सुअ–नोसुअ सुअ दुविहं पुव्वमपुव्वं तु होइ नायव्वं । नोसुअपच्चक्खाणं मूले तह उत्तरगुणे य ॥ १०५४ ॥

द्विविधं भावप्रत्याख्यानं–श्रुतप्रत्याख्यानं नोश्रुतप्रत्याख्यानं च, 'सुय दुविहं'ति श्रुतप्रत्याख्यानं द्विविधं भवति ज्ञातव्यं,

तद्यथा—पूर्वश्रुतप्रत्याख्यानमपूर्वश्रुतप्रत्याख्यानं च, तत्र पूर्वश्रुतप्रत्याख्यानं प्रत्याख्यानसंज्ञितं पूर्वं, अपूर्वश्रुतप्रत्याख्यानं त्वातुरप्रत्याख्यानादि, तथा नोश्रुतप्रत्याख्यानं श्रुतप्रत्याख्यानादन्यत्, तच्च द्विधा 'मूले तह उत्तरगुणे य' मूलगुणप्रत्याख्यानं उत्तरगुणप्रत्याख्यानं च, मूलगुणप्रत्याख्यानं द्विभेदं, तद्यथा—देशप्रत्याख्यानं सर्वप्रत्याख्यानं च, देशप्रत्याख्यानं श्रावकाणां, सर्वप्रत्याख्यानं संयतानां, सर्वप्रत्याख्यानेन चेहाधिकारः, सामायिकानन्तरं सर्वं सावद्यं योगं प्रत्याख्यामीत्युपादानात्, इह वृद्धसम्प्रदायः—पच्चक्खाणे उदाहरणं, रायधूयाए पच्चक्खायं वरिसं जाव मंसं न खइयव्वं, पारणगे अणेगाणं जीवाणं घातो कतो, साहू विहरंता आगया, मंसं न पडिग्गहियं, तीए भणियं—किं तुज्झं अज्जवि वरिसं न पुज्जइ ?, साहूहिं भणियं—जावजीवमम्हं मंसपच्चक्खाणं, एत्थ धम्मकहा, सा संबुद्धा, पव्वइया, पुव्वं दव्वपच्चक्खाणं, पच्छा भावपच्चक्खाणं ॥ तदेवं व्याख्यातः प्रत्याख्यानमिति सूत्रावयवः, अधुना 'यावज्जीवये'ति व्याख्यायते, तत्रादौ भावार्थमभिधित्सुराह—

जावदवधारणम्मि जीवणमवि पाणधारणे भणिअं। आ पाणधारणाओ पावनिवत्ती इहं अत्थो ॥ १०५८ ॥

यावदित्ययं शब्दोऽवधारणे वर्त्तते, जीवनमपि प्राणधारणे भणितं, 'जीव प्राणधारण'इति वचनात्, ततो यावज्जीवया प्रत्याख्यामीति, कोऽर्थः ?—आ प्राणधारणात्—प्राणधारणं यावत् पापनिवृत्तिरिति, परतस्तु न विधिर्नापि प्रतिषेधः, विधावाशंसादोषप्रसङ्गात्, प्रतिषेधे तु सुरादिषूत्पन्नस्य भङ्गप्रसङ्गात्, इह च जीवनं जीव इति क्रियाशब्दो, न जीवतीति जीवः—आत्मा पदार्थः, जीवनं च प्राणधारणं, जीवनं जीवितं चेत्येकार्थं, तत्र जीवितं दशधा, तथा चाह—

नामं १ ठवणा २ दविए ३ ओहे ४ भव ५ तब्भवे ६ य भोगे ७ य।
संजम ८ जस ९ कित्ती १० जीवियं च तं भण्णई दसहा ॥ १०५६ ॥

तज्जीवितं दशधा भण्यते, तद्यथा—नामजीवितं स्थापनाजीवितं द्रव्यजीवितमोघजीवितं भवजीवितं तद्भवजीवितं भोगजीवितं संयमजीवितं यशोजीवितं कीर्त्तिजीवितं च, एष गाथासमासार्थः ॥ व्यासार्थं तु भाष्यकारः स्वयमेव वक्ष्यति, तत्र नामस्थापने क्षुण्णत्वादनादृत्य शेषभेदव्याख्यानार्थमाह—

दव्वे सच्चित्ताई आउयसद्दवया भवे ओहे। नेरइयाईण भवे तब्भव तत्थेव उप्पत्ती ॥ १९० ॥ (भा.)

द्रव्ये—द्रव्यविषयं जीवितं, द्रव्यजीवितमित्यर्थः, सचित्तादि सचित्तमचित्तं मिश्रं वा, इह कारणे कार्योपचारात् येन द्रव्येण सचित्ताचित्तमिश्रभेदेन पुत्रहिरण्योभयरूपेण यस्य यथा जीवितमायत्तं तस्य तथा तद् द्रव्यजीवितमुच्यते, उक्तं द्रव्यजीवितं, 'आउयसद्दवया भवे ओहे' ओघजीवितं—सामान्यजीवितं आयुस्सद्द्रव्यता—आयुःप्रदेशकर्म्म तस्य द्रव्यैः सह(वर्त्त)मानता आयुःसद्द्रव्यता, आयुःकर्मद्रव्यसहचारिता जीवस्येत्यर्थः, इदं च सामान्यजीवितं सकलसंसारिणामविशेषेण सर्वदा भावि, तत इदमङ्गीकृत्य यदि परं सिद्धा एव मृता, न पुनरन्ये केचन, उक्तमोघजीवितं, नैरयिकादीनां नैरयिकतिर्यङ्नरामराणां भव इति स्वस्वभवे स्थितिर्भवजीवितं, उक्तं भवजीवितं, 'तब्भव तत्थेव उववत्ती' तस्मिन् भवे भूयो जीवितं तद्भवजीवितं, किं तदित्याह—तत्रैवोत्पत्तिः तत्र—तस्मिन् अधिकृते तिर्यग्भवे मनुष्यभवे वा स्वकायस्थित्यनुसारेण भूयो भूय उत्पत्तिः, इदं चौदारिकशरीरिणामेवावसातव्यं, अन्यत्र निरन्तरं भूयो भूयस्तत्रैवोत्पत्त्यभावात् । उक्तं तद्भवजीवितं ॥

भोगम्मि चक्किमाइ संजमजीवं तु संजयजणस्स। जस कित्ती य भगवओ संजमनरजीवअहिगारो॥१९१॥ (भा.)

'भोगे' भोगजीवितं चक्रवर्त्यादीनाम्, आदिशब्दाद्बलदेववासुदेवादिपरिग्रहः, उक्तं भोगजीवितं, संयमजीवितं 'संयतजनस्य' साधुलोकस्य, उक्तं संयमजीवितं, यश कीर्त्तिः (श्च) भगवतो वर्द्धमानस्वामिनः, ततो यशोजीवितं कीर्त्तिजीवितं च भगवतः प्रतिपत्तव्यं, यशकीर्त्त्योश्चायं विशेषः, "दानपुण्यफला कीर्त्तिः, पराक्रमकृतं यशः" अन्ये त्विदमेकमेवाभिदधति—केवलं संयमप्रतिपक्षभावतो दशममसंयमजीवितमविरतिगतं प्रतिभणन्ति, 'संजमनरजीव अहिगारो'त्ति संयमजीवितेन नरभवजीवितेन चेहाधिकारः, 'यावज्जीवाए' इत्यत्र यावज्जीवतयेत्यपि संस्कारः, तत्र यावत् जीवो—जीवनं—प्राणधरणं यावज्जीवं, 'यावदवधारणे' इत्यव्ययीभावः समासः, यावज्जीवं भावो यावज्जीवता तया यावज्जीवतया, तत्र प्राकृते तकारस्यालाक्षणिको लोप इति यावज्जीवाए इति सिद्धं, अथवा प्रत्याख्यानक्रिया अन्यपदार्थः, यावज्जीवो यस्यां सा यावज्जीवा तया यावज्जीवयेति, कृतं प्रसङ्गेन। तथा तिस्रो विधा यस्य स त्रिविधः सावद्ययोगः, स च प्रत्याख्येय इति कर्म, कर्म्मणि च द्वितीया विभक्तिः, तं त्रिविधं योगं, त्रिविधेन करणेन, अस्यैव विवरणमाह—मनसा वाचा कायेन, तस्य च करणस्य कर्म्म प्रत्याख्येयो योगः, तमपि सूत्रेण एव विवृणोति, न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि—नानुमन्ये। आह—किं पुनः कारणमुद्देशक्रममभिलङ्घ्य व्यत्यासेन निर्देशः कृतः ?, उच्यते, योगस्य करणतन्त्रतोपदर्शनार्थं, तथाहि—योगः करणवश एव, करणानां भावे योगस्यापि भावाद् अभावे चाभावात्, करणानामेव तथाक्रियारूपेण प्रवृत्तेः, अपरस्त्वाह—न करोमि न कारयामि कुर्वन्तं न समनुजानामि इत्येतावता ग्रन्थेन गतेऽन्यमपीत्यतिरिच्यते,

न चातिरिक्तेण सूत्रेण चार्थः, उच्यते, साभिप्रायमिदमनुक्तस्याप्यर्थस्य सङ्ग्रहार्थं, तथाहि–सम्भावनेऽयमपिशब्दः, स चोभयमध्यस्थः एतत्सम्भावयति, यथा कुर्वन्तं नानुजानामि एवं कारयन्तमप्यन्यं अनुज्ञापयंतमप्यन्यं नानुजानामीति, यथा वर्त्तमानकाले कुर्वन्तमप्यन्यं न समनुजानामि, एवमपिशब्दादतीते काले कृतवन्तमपि कारितवंतमपि अनुज्ञापितवंतमपि, तथाऽनागते काले करिष्यन्तमपि कारयिष्यन्तमपि अनुज्ञापयिष्यन्तमपीति त्रिकालमपि सङ्ग्रहो वेदितव्यः, इह न क्रियाक्रियावतोरेकान्तेनाभेद एव, ततो न केवला क्रिया सम्भवति इति ख्यापनार्थमन्यग्रहणं, अत्र बहु वक्तव्यं तत्तु नोच्यते, मा भूद् मुग्धमतिविनेयसम्मोह इति । किञ्चित्तु सूत्रस्पर्शनिर्युक्तौ वक्ष्यामः । तदेवमिदमेतावत्सूत्रस्य व्याख्यातम्, इह तु 'सर्वं सावद्यं योगं प्रत्याख्यामी'त्यत्र प्रत्याख्यानं गृहस्थान् साधूनपि प्रतीत्य भेदपरिणामतो निरूपयति, गुरवस्तु व्याचक्षते–तदिदमेतावत् सूत्रस्य व्याख्यातं, सम्प्रति 'त्रिविधं त्रिविधेने'त्येतदेव व्याचष्टे, तत्र त्रिविधं सावद्ययोगं प्रत्याख्येयं कृतकारितानुमतिभेदभिन्नं त्रिविधेन मनसा वाचा कायेनेति करणेन प्रत्याख्याति, ततस्तद्भेदोपदर्शनार्थमाह—

सीआलं भंगसयं तिविहं तिविहेण समिईगुत्तीहिं । सुत्तप्फासियनिज्जुत्तिवित्थरत्थो गओ एवं ॥ १०५७ ॥

तत्राह–यद्येवमिह सर्वसावद्ययोगप्रत्याख्यानाधिकारात् सप्तचत्वारिंशदधिकशतं प्रत्याख्यानभेदानां गृहस्थप्रत्याख्यानभेदत्वात् अयुक्तमेतदिति, अत्रोच्यते, प्रत्याख्यानसामान्यतो गृहस्थप्रत्याख्यानभेदाभिधानेऽप्यदोषात्, तत्र सप्तचत्वारिंशदधिकं भेदशतं भाव्यते–सीयालं भंगसयं गिहिपच्चक्खाणभेयपरिमाणं । तं च विहिणा इमेणं भावेयव्वं पयत्तेणं ॥ १ ॥ इह योगविषये त्रयस्त्रिकाःत्रयो द्विकाः त्रय एककाः, करणानि पुनर्योगेष्वथ एवं–त्रिद्व्येकं त्रिद्व्येकं त्रिद्व्येकं चेति, "तिन्नि

तिया तिन्नि दुया तिन्निकाका य होंति जोगेसु। तिदुएक्कं तिदुइक्कं तिदुएक्कं चेव करणाइं ॥१॥" आगतफलं तु क्रमेणैवम्-एक
एकक्स्त्रयस्त्रिका द्वौ नवकौ एकस्त्रिको द्वौ नवकाविति, स्थापना ३ ३ ३ २ २ २ १ १ १ / ३ २ १ ३ २ १ ३ २ १ / १ ३ ३ ३ ९ ९ ३ ९ ९ का पुनरत्र भावना-न करेइ
न कारवेइ करंतंपि अन्नं न समणुजाणइ मणेणं वायाए काएणं एस एको भेदो, नन्वेष भङ्गो देशविर-
तस्य कथमुपपद्यते?, अनुमतेस्तस्य प्रतिवन्धासम्भवात्, नैष दोषः, स्वविषयाद्बहिरनुमतेरपि प्रतिषेधसंभवात्, यथा स्वयं-
भूरमणसमुद्रमत्स्यादिघाते, उक्तं च-"न करेईच्चाइ तिगं गिहिणो कह होइ देसविरयस्स ?। भन्नइ विसयस्स वहिं पडि-
सेहो अणुमतीएऽवि ॥ १ ॥" अत्रैवाक्षेपपरिहारौ भाष्यकृदाह-"केई भणंति गिहिणो तिविहं तिविहेण नत्थि संवरणं।
तं न जतो निद्दिट्ठं पन्नत्तीए विसेसेउं ॥ १ ॥ तो कह निज्जुत्तीएऽणुमइनिसेहोत्ति ? सो सविसयंमि। सामन्नेणं नत्थि उ
तिविहं तिविहेण को दोसो ? ॥ २ ॥ पुत्ताइसंततिनिमित्तमेत्तमेकादसिं पवन्नस्स। जंपंति केइ गिहिणो दिक्खाभिमुह-
स्स तिविहंपि ॥ ३ ॥ ( विशे. ३५४२-३-४ ) एतास्तिस्रोऽपि गाथा भावार्थमङ्गीकृत्योपोद्घातनिर्युक्तौ भाविता इति न
भूयः प्रतन्यन्ते। आह कहं पुण मणसा करणं कारावणं अणुमती य ?। जह वइतणुजोगेहिं करणाई तह भवे मणसा
॥ १ ॥ तयहीणत्ता वइतणुकरणाईणमहव मणकरणं। सावज्जजोगमननं पन्नत्तं वीयरागेहिं ॥ २ ॥ कारवणं पुण मणसा
चिंतेइ करेउ एस सावज्जं। चिंतेती उ कए पुण सुट्ठु कयं अणुमती होइ ॥ ३ ॥ गाथात्रयमपीदं सुगमं, एष गतः प्रथमो
भेदः, न करेइ न कारवेइ करंतंपि अन्नं न समणुजाणइ मणेणं वायाए एस एको १, मणेणं काएण य विइओ २, वायाए
काएण य तईओ ३, एस विइओ मूलभेदो गतो। इदाणिं तइओ-न करेइ न कारवेइ करंतंपि अन्नं न समणुजाणइ

मणेणं एक्को १ वायाए बिइओ २ काएण तइओ ३, एस तइयो मूलभेदो गतो । इयाणिं चउत्थो—न करेइ न कारवेमि मणेणं वायाए काएणं एक्को १ न करेइ करंतं नाणुजाणइ बिइओ २, न कारवेइ करंतं नाणुजाणइ तईओ ३ । एस चउत्थो मूलभेदो गतो । इदाणिं पंचमो—न करेइ न कारवेमि मणेणं वायाए एस एक्को १ न करेइ करेंतं नाणुजाणइ एस बितिओ २, न कारवेइ करंतं नाणुजाणइ एस तइओ ३, एए तिन्नि भंगा मणेणं वायाए य लद्धा, अण्णेऽवि तिण्णि मणेण काएण य एवमेव लब्भंति, तहा अवरेऽवि तिन्नि वायाए काएण य लब्भंति, एवमेते सवे नव, एवं पंचमोऽप्युक्तो मूलभेदः । इयाणिं छट्ठो—न करेइ न कारवेइ मणेणं एस एक्को १ तह य न करेइ करंतं नाणुजाणइ मणेणं एस बिइओ २, न कारवेइ करेंतं नाणुजाणइ मणेणं एस तईओ, एवं वायाएवि तिण्णि, काएण तिण्णि लब्भंति, उक्तः षष्ठो मूलभेदः । अधुना सप्तमः—न करेइ मणेणं वायाए काएण य एक्को, न कारवेइ मणमाईहिं एस बितिओ, करेंतं नाणुजाणइ एस तइओ, सप्तमोऽप्युक्तो मूलभेदः । इदानीमष्टमः—न करेइ मणेण वायाए एक्को, तहा मणेण काएण य एस बिइओ, तहा वायाए काएण य एस तइओ, एवं न कारवेइ, एत्थवि तिण्णि भंगा, करेंतं नाणुजाणइ, एत्थवि तिण्णि, उक्तोऽष्टमो मूलभेदः । सम्प्रति नवमः—न करेइ मणेणं एक्को, न कारवेइ बितिओ, करेंतं नाणुजाणइ एस तइओ, एवं वायाए तिन्नि, काएण य तिन्नि, उक्तो नवमः । इह प्रथमभङ्गे एक एव भङ्गः द्वितीयभङ्गे त्रयः तृतीयभङ्गे त्रयः, चतुर्थभङ्गे त्रयः पञ्चमे भङ्गे नव षष्ठभङ्गे नव सप्तमभङ्गे त्रयः अष्टमभङ्गे नव नवमभङ्गेऽपि नवेति, सर्वसङ्ख्यया एकोनपञ्चाशद्भङ्गाः, तत्रातीतात् सावद्ययोगात् प्रतिक्रमणं प्रत्युत्पन्नस्य संवरणं अनागतस्य प्रत्याख्यानमिति कालत्रयेण एकोनपञ्चाशद् गुणिताः

सप्तचत्वारिंशदधिकं भङ्गशतं भवति, उक्तं च–"लद्धफलमाणमेयं भंगा उ भवंति अउणपन्नासं । तीयाणागयसंपइगुणियं कालेण होइ इमं ॥ १ ॥ सीयालं भंगसयं कह ? कालतिएण होइ गुणणाओ । तीयस्स पडिक्कमणं पच्चुप्पण्णस्स संवरणं ॥ २ ॥ पच्चक्खाणस्स तहा होइ एसस्स एव गुणणाओ । कालतिएणं भणियं जिणगणहरवायगेहिं च ॥ ३ ॥ एवं तावत् गृहस्थप्रत्याख्यानभेदाः प्रतिपादिताः, सम्प्रति साधुप्रत्याख्यानभेदान् सूचयति–'तिविहेणं'ति, अयमत्र भावार्थः–त्रिविधं त्रिविधेनेत्यनेन सर्वसावद्ययोगप्रत्याख्यानादर्थतः सप्तविंशतिभेदानाह, ते चैवं भवति–इह सावद्ययोगः प्रसिद्ध एव हिंसादिः, तं स्वयं न करोति न कारयति कुर्वन्तमप्यन्यं न समनुजानाति, एकैकं करणत्रिकेण मनसा वाचा कायेनेति नवभेदाः, अतीतानागतवर्त्तमानकालत्रयसम्बन्धाच्च सप्तविंशतिरिति, इदं च प्रत्याख्यानभेदजालं 'समितिगुत्तीहिं'ति समितिगुप्तिभिर्निष्पद्यते, तत्र ईर्यासमितिप्रमुखाः प्रवीचाररूपाः पञ्च समितयः, गुप्तयस्तु प्रवीचाराप्रवीचाररूपा मनोगुप्त्यादयस्तिस्रः, अन्ये व्याचक्षते–किलैता अष्टौ प्रवचनमातरः सामायिकसूत्रेण गृहीताः, तत्र 'करेमि भंते ! सामाइयं'ति पञ्च समितयो गृहीताः, 'सव्वं सावज्जं जोगं पच्चक्खामी'ति तिस्रः गुप्तयः, अत्र समितयः क्रियायाः प्रवर्त्तने निग्रहे गुप्तयः, एताः खल्वष्टौ प्रवचनस्य मातर इव मातरः, सामायिकसूत्रस्य चतुर्दशपूर्वाणां चात्रैव परिसमाप्तत्वात्, उक्तं च–"एआओ अट्ठ पवयणमायाओ जासु सामाइयं चउद्दस पुव्वाणि अ मायाणि, माउगातोत्ति मूलं भणियं होइ ॥" इहैव प्रायः सूत्रस्पर्शिकनिर्युक्तिवक्तव्यताया उक्तत्वात् मध्यग्रहणे च तुलादण्डन्यायेनाद्यन्तयोरप्याक्षेपात् इदमाह–'सुत्तप्फा-

एवं'ति, सूत्रस्पर्शकनिर्युक्तिविस्तरार्थो गत एवमुक्तेनेति ॥ सम्प्रति सूत्र एवातीतादित्रिवि-
सियनिज्जुत्तिवित्थरत्थो गतो
धकालग्रहणमुक्तमिति दर्शयन्नाह—

सामाइयं करेमि पचक्खामी पडिक्कमामिमित्ति । पच्चुप्पन्नमणागयअईअकालाण गहणं तु ॥ १०५८ ॥

'सामायिकं करोमि', तथा 'प्रत्याख्यामि सावद्ययोग'मिति, तथा 'प्रतिक्रमामि प्राकृतात् सावद्ययोगात्', इदं हि
यथासङ्ख्यमेव प्रत्युत्पन्नानागतातीतकालानां ग्रहणमिति, उक्तं च—"अतीतं निंदइ पडुप्पन्नं संवरेइ अणागयं पच्चक्खाति",
इति ॥ सम्प्रति तस्य भदन्त ! प्रतिक्रमामीत्येतद् व्याख्यायते—'तस्ये'त्यधिकृतो योगः सम्बध्यते, ननु च प्रतिक्रमामी-
त्यस्याः क्रियायाः सोऽधिकृतो योगः कर्म्म, कर्म्मणि च द्वितीया विभक्तिरतस्तमित्यभिधेये किमर्थं तस्येत्यभिधीयते ?,
उच्यते, विशेषख्यापनार्थं, तथाहि—'तस्ये'त्यत्रावयवावयविसम्बन्धे षष्ठी, ततोऽयमर्थः—योऽसौ योगस्त्रिकालविषयः तस्या-
तीतं सावद्यमंशं प्रतिक्रमामि, न शेषं वर्त्तमानमनागतं वा, केचित् पुनरविभागज्ञा अविशिष्टमेव सामान्येन योगं सम्बन्ध-
यति, तन्न युक्तं, अविशिष्टस्य त्रिकालविषयस्य प्रतिक्रमणासम्भवात्, अतीतविषयस्यैव प्रतिक्रमणस्य तत्र तत्र सूत्रेऽभि-
धानात्, अथ मन्येथाः—अविशिष्टमपि योगं सम्बध्य पुनर्विशेष्येऽवस्थापनीयस्तच्छब्दस्ततो न कश्चिद्दोषः, तदप्यसमीचीनं,
एवं सति प्रतिपत्तिगुरुताप्रसक्तेः, पूर्वं अविशेषेण योगस्य सम्बन्धः, तदनन्तरं पुनरेतच्छब्दस्य विशेषेऽवस्थापनमिति न
ऋज्वी प्रतिपत्तिः, यद्येवं तर्हि 'अतीतं भंते ! पडिक्कमामि' इत्येतावदेव सुखप्रतिपत्तये कस्मान्न कृतं ?, उच्यते, पुन-
रुक्तत्वदोषप्रसङ्गात्, तथाहि—प्रतिक्रमणमेतत् प्रायश्चित्तमध्ये पठितं, तच्च प्रायश्चित्तमासेविते भवति, ततोऽर्थादतीतविष-

यमेवेत्यतीतग्रहणमतिरिच्यते, तस्मात् प्रतिक्रमामीति शब्दस्यावश्यं कर्म्मणा भवितव्यं, तच्च भूतं सावद्ययोगं मुक्त्वा नान्यत् कर्म भवितुमर्हतीत्यर्थात् तस्येत्यवयवावयविसम्बन्धलक्षणा षष्ठीति न कदाचिदर्थहानिः प्रतिपत्तिगुरुता चेति । आह–यदि पुनरुक्तादिभयादेवमभिधीयते तदा इदमपरमनर्थकं पदमिति दर्शयति—

तिविहेणं तु न जुत्तं पडिवयविहिणा समाहिअं जेण। अत्थविगप्पणयाए गुणभावणयत्ति को दोसो? ॥ १०५९॥

'त्रिविधं त्रिविधेने'त्यत्र त्रिविधेनेति न युक्तं, किमित्यत आह–प्रतिपदविधिना समाहितं येन, यस्मादस्यार्थः प्रतिपदमभिहित एव, तद्यथा–मनसा वाचा कायेनेति, अत्रोच्यते–अर्थविकल्पनया गुणभावनयेति को दोषः?, अर्थविकल्पना नामाभेदोपदर्शनं गुणभावना–गुणाभ्यासस्ताभ्यां हेतुभ्यामेवमभिधाने न कश्चिद्दोषः, इयमत्र भावना–एवं ह्युक्ते सामान्यविशेषरूपत्वं सर्वस्याप्यर्थस्योपदर्शितं भवति, तथाहि–तिविहं तिविहेणेति सामान्यरूपता दर्शिता, मणेणं वायाए इत्यादिना तु विशेषरूपतेति, तथा एवमभिहिते यः सामायिकलक्षणो गुणस्तस्य पुनः पुनरभिधानात्मिका भावना भवति, गुणभावना च कर्म्मनिर्ज्जरणहेतुरित्यदोषः, अन्यच्च–मनसा वाचा कायेनेत्यभिहिते प्रतिपदं न करोमि न कारयामि नानुजानामीति 'यथासङ्ख्यमनुदेशः समाना'मिति न्यायतो यथासङ्ख्यमनिष्टं मा प्रापदिति त्रिविधेनैकक(नेत्येव)मुच्यते, एवं त्रिविधमित्यत्राप्याक्षेपपरिहारौ स्वयमनुगन्तव्यौ, प्रायः समानगमत्वादिति कृतं प्रसङ्गेन । तस्य भदन्त ! प्रतिक्रमामीत्यत्र भदन्तेति पूर्ववत्, इदं चामन्त्रणमतिचारनिवृत्तिक्रियाभिमुखः सन् तद्विशुद्ध्यर्थं कुरुते, आह–ननु पूर्वमुक्तो योऽभदन्तशब्दः स एवात्राप्यनुवर्त्तिष्यते, एवमर्थं ह्यादौ स प्रयुक्त इति, किमर्थमस्योपादानमिति ?, उच्यते; अनु-

त्रिकालिकता पदचिन्ता च

वर्त्तनार्थमेवायं पुनरनुसरणाय प्रयुक्तः, तथा च इयं पाणिनिप्रभृतीनां परिभाषा—अनुवर्त्तन्ते च नाम विधयो न चानुवर्त्तनादेव भवन्ति, किन्तर्हि ?, यत्नाद् भवन्ति, स चायं यत्नः पुनरुच्चारणमिति, अथवा सामायिकक्रियाप्रत्यर्पणवचनोऽयं भदन्तशब्दः, अनेन चैतत् ख्यापितं भवति—सर्वक्रियावसाने गुरोः प्रत्यर्पणं कार्यमिति, उक्तं च भाष्यकारेण—"सामाइयपच्चप्पणवयणो वाऽयं भदंतसद्दोत्ति । सव्वकिरियावसाणे भणियं पच्चप्पणमणेणं ॥ १ ॥" ( विशे. ३५७१ ) प्रतिक्रमामीत्यत्र प्रतिक्रमणं मिथ्यादुष्कृतमभिधीयते, तच्च द्विधा—द्रव्यतो भावतश्च, तथा चाह निर्युक्तिकारः—

दव्वम्मि निण्हगाई कुलालमिच्छंति तत्थुदाहरणं । भावम्मि तदुवउत्तो मिगावई तत्थुदाहरणं ॥ १०३० ॥

द्रव्ये—द्रव्यप्रतिक्रमणं प्रतिक्रमणप्रतिक्रमणवतोरभेदोपचारात् निह्नवादिः, आदिशब्दादनुपयुक्तादिपरिग्रहः, तत्रोदाहरणं कुलालमिथ्यादुष्कृतं, तच्चेदं—एगस्स कुंभगारस्स कुडीए साहुणो ठिया, तत्थेगो चेल्लगो तस्स कुंभगारस्स भंडाणि अंगुलिधणुहएण कक्करेहिं विंधइ, कुंभगारेण पडिजग्गयंतेण दिट्ठो, भणिओ य—कीस मे भंडाणि काणेसि ?, खुड्डगो भणइ—मिच्छादुक्कडंति, एवं सो पुणो पुणो विंधिऊण मिच्छादुक्कडं देइ, पच्छा कुंभगारेण तस्स खुड्डगस्स कण्णामोडओ दिन्नो, सो भणइ—दुक्खाविज्जामि अहं, कुंभगारो भणइ—मिच्छामि दुक्कडं, एवं सो पुणो पुणो कण्णामोडयं दाऊण मिच्छादुक्कडं करेइ, पच्छा चेल्लगो भणइ—अहो सुंदरं मिच्छादुक्कडंति, कुंभगारो भणति—तुज्झवि एरिसं चेव मिच्छादुक्कडंति, पच्छा ठितो विंधियव्वस्स, एवं द्रव्यपडिक्कमणं । भावप्रतिक्रमणं प्रतिपादयति—'भावंमी'त्यादि, भावे—भावप्रतिक्रमणं 'तदुपयुक्तः' तस्मिन्नधिकृते शुभव्यापारे उपयुक्तस्तदुपयुक्तो यत् करोति प्रतिक्रमणं भावप्रतिक्रमणं, तत्रोदाहरणं मृगावती, भयवं वद्ध-

माणसामी कोसंबीए समोसरितो, तत्थ चंदसूरा भयवंतं वंदगा सविमाणा ओइण्णा, तत्थ मिगावती अज्जा उदयणमाया दिवसोत्तिकाउं चिरं ठिया, सेसाओ साहुणीओ तित्थयरं वंदिऊण पडिगया, सिग्घमेव वियालीभूयं, मिगावती संभंता गया अज्जचंदणासगासं, एयातो ताव पडिक्कंताओ, मियावती आलोएउं पवत्ता, अज्जचंदणाए भणिया-अज्जो! चिरं ठियासि, किं जुत्तं नाम तुज्झ उत्तमकुलप्पसूयाए एगागिणीए चिरं अच्छिउंति ?, सा सब्भावेण मिच्छादुक्कडंति भणमाणी अज्जचंदणाए पाएसु पडिया, अज्जचंदणाएवि तीए वेलाए संथारगं गयाए निद्दा आगया, पसुत्ता, मिगावतीएवि तिव्वसंवेगमावन्नाए पायवडियाए चेव केवलनाणं समुप्पण्णं, सप्पो य तेणंतेणमुवागतो, अज्जचंदणाए य संथारगातो हत्थो लंबति, मिगावतीए मा खज्जिहित्ति सो हत्थो संथारगं चडावितो, सा विबुद्धा, भणइ-किमेयंति ?, अज्जवि तुमं अच्छासित्ति मिच्छादुक्कडं, निद्दापमाएणं न उट्ठवियासि, मियावती भणति-एस सप्पो मा ते खाहितित्ति हत्थो चडावितो, सा भणइ-कहिं सो ?, सा दाएइ, अज्जचंदणा अपेच्छमाणी भणइ-अज्जो! किं ते अतिसयो ?, सा भणइ-आमं, तो किं छउमत्थो केवलिगो वा ?, सा भणइ-केवलिगो, पच्छा अज्जचंदणा पाएसु पडिउं भणइ-मिच्छादुक्कडं, केवली आसाइतो, एवं भावपडिक्कमणं, एत्थ गाहा-जइ य पडिक्कमियव्वं, अवस्स काऊण पावयं कम्मं। तं चेव न कायव्वं, ता होइ पए पडिक्कंतो ॥ १ ॥ (आव. ६८३) इह च प्रतिक्रमामि, भूतात् सावद्ययोगान्निवर्त्तेऽहमित्युक्तं भवति, तस्माच्च निवृत्तिर्यत्तदनुमतिविरमणमिति, तथा निंदामि गर्हे इति, अत्र निन्दामि जुगुप्से इत्यर्थः, गर्हे इति च तदेवोक्तं भवति, यद्येवं तत एकार्थत्वे को भेदः ?, उच्यते, सामान्यार्थाभेदेऽपि इष्टविशेषार्थो गर्हाशब्दः, यथा सामान्ये गमनार्थे गच्छतीति गौः सर्पतीति सर्पः,

कुंभकार-
क्षुल्लकयो-
मृगावत्या-
श्च दृष्टा-
न्तौ

तथापि गमनविशेषोऽवगम्यते शब्दार्थादेव, एवमिहापि निन्दागर्हयोरर्थविशेषोऽवसातव्यः, तमेवार्थविशेषं दर्शयति—

सचरित्तपच्छयावो निंदा तीए चउक्कनिक्खेवो। दव्वे चित्तगरसुआ भावे सुबहू उदाहरणा ॥ १०६१ ॥

सचरित्रस्य सत्त्वस्य पश्चात्तापः स्वप्रत्यक्षं जुगुप्सा निन्दा, उक्तं च—'आत्मसाक्षिकी निन्दे'ति, तस्याश्च निन्दाया नामादि-
भेदश्चतुष्को निक्षेपः, तत्र नामस्थापने प्रतीते, द्रव्यनिन्दायां चित्रकरसुता उदाहरणम्—सा जहा रण्णा परिणीया, अप्पाणं
निंदियाइया तहा कहेयव्वा, हेट्ठा कहाणगं कहियंति पुणो न भन्नइ, भावनिंदायां सुबहून्युदाहरणानि योगसङ्ग्रहे वक्ष्यंते,
लक्षणं पुनरिदम्—हा दुट्ठु कयं हा दुट्ठु कारिअं हा दुट्ठु अणुमयं हत्ति। अंतो अंतो डज्झइ, पच्छातावेण वेवंतो ॥ १ ॥

गरिहावि तहाजाइयमेव नवरं परप्पगासणया। दव्वंमि य मरुणायं भावे सुबहू उदाहरणा ॥ १०६२ ॥

गर्हापि तथाजातीयैव—निन्दाजातीयैव, नवरं—एतावान् विशेषः, परप्रकाशनया गर्हा भवति, किमुक्तं भवति ?—या गुरोः
प्रत्यक्षं जुगुप्सा गर्हेति, 'परसाक्षिकी गर्हे'ति वचनात्, सापि नामादिभेदाच्चतुर्विधा, तत्र नामस्थापने अनादृत्याह—द्रव्ये
द्रव्यगर्हायां मरुकोदाहरणं, तच्चेदम्—आणंदपुरे मरुओ ण्हुसाए समं संवासं काऊण उवज्झायस्स कहेइ, जहा सुमिणए
ण्हुसाए समं संवासं गतोमित्ति। भावगर्हायां साधोरुदाहरणं,—गंतूण गुरुसमीवं काऊण य अंजलिं विणयमूलं। जह अप्पणो
तह परे जाणावण एस गरिहा उ ॥ १ ॥ ( ओघ. १५८ )त्ति। किं निंदामि गर्हे इत्यत आह—'आत्मानं' अतीतसावद्य-
योगकारिणमश्लाघ्यं, अथवा अत्राणं—त्राणविरहितं अतीतसावद्ययोगं निंदामि गर्हे, सामायिकेनाधुना त्राणमिति, अथवा
'अत सातत्यगमने' अतनं—सततभवनप्रवृत्तं अतीतं सावद्यं योगं निन्दामि गर्हे, निवर्त्तयामीति तात्पर्यार्थः, 'व्युत्सृजामी'ति

विविधार्थो विशेषणार्थो वा विशब्दः उच्छब्दो भृशार्थे सृजामि—त्यजामि, विविधं विशेषेण वा भृशं त्यजामि अतीतसावद्य-योगमिति भावः, ननु करोमि भदन्त ! सामायिकमिति सावद्ययोगविनिवृत्तिरित्युच्यते, तस्य व्युत्सृजामीति शब्दप्रयोगे वैपरीत्यमापद्यते, तत्र, यस्मात् मांसादिविरमणक्रियानन्तरं व्युत्सृजामीति प्रयोगे तद्विपक्षत्यागो मांसभक्षणनिवृत्तिरभि-धीयते, एवमिहापि सामायिकानन्तरं व्युत्सृजामीति प्रयोगे तद्विपक्षत्यागः सावद्ययोगनिवृत्तिरवगम्यते इति, स च व्युत्सर्गो नामादिभेदाच्चतुष्प्रकारः, तत्र नामस्थापने अनादृत्याह—

दव्वविउस्सग्गे खलु पसन्नचंदो भवे उदाहरणं । पडियागयसंवेगो भावम्मिवि होइ सो चेव ॥ १०६३ ॥

द्रव्यव्युत्सर्गो—गणोपधिशरीरान्नपानादिव्युत्सर्गः, अथवा द्रव्यव्युत्सर्गो नाम आर्त्तध्यानादिध्यायिनः कायोत्सर्गः, अत एवाह—द्रव्यव्युत्सर्गे खलु प्रसन्नचंद्रो राजर्षिर्भवत्युदाहरणं, भावव्युत्सर्गस्त्वज्ञानादिपरित्यागः, अथवा धर्म्मशुक्लध्यायिनः कायोत्सर्गः, तथा चाह—प्रत्यागतसंवेगो भावव्युत्सर्गेऽपि स एव—प्रसन्नचन्द्रो राजर्षिरुदाहरणमिति गाथाक्षरार्थः, भावार्थः कथानकादवसेयः, तच्चेदम्—पोयणपुरे नगरे पसन्नचंदो राया, तत्थ भयवं महावीरो समोसढो, तत्तो राया धम्मं सोऊण संजायसंवेगो पव्वइतो, गीयत्थो जाओ, अन्नया जिणकप्पं पडिवज्जिउकामो सत्तभावणाए अप्पाणं भावेति, तेणं कालेणं तेणं समएणं रायगिहे मसाणपडिमं पडिवन्नो, भयवंपि महावीरो तत्थेव रायगिहे समोसढो, लोगो पवंदओ नीति, दुवे य वाणियगा पोयणपुरातो तत्थेव आगया, तत्थेगो पसन्नचंदं पासिऊण भणइ—एस अम्हाण सामी रायसिरिं परिच्चइऊण तवसिरिं पडिवन्नो, अहो एयस्स धण्णया, बिइओ भणइ—कत्तो एयस्स धन्नया ? जो य असंजायबलं पुत्तं रज्जे ठवेऊण

पवइतो, सो तवस्सी पचंतनिवेहिं मंतीहि य परिहविज्जइ, नगरं च उत्तमखयं पवन्नं, अंतेउरंपि कमपि अवत्थं गयं न जाणि-
ज्जइ, ता एवमणेण बहू लोगो दुक्खे ठवितोत्ति अदट्ठवो एस, तं सोऊण तस्स कोवो जातो, चिंतियं चऽणेण-को मम
पुत्तस्स अवकरेइ ?, नूणममुगो, ता किं तेण ?, एयावत्थगतोवि विणिवाएमि, माणससंगामेण रोद्दज्झाणं पवन्नो, हत्थिणा
हत्थिं वावाएइ, आसेण आसं, इच्चाइ विभासा, एत्थंतरे सेणिओ भयवं वंदतो जाइ, तेण दिट्ठो, वंदितो, णेण ईसिंपि नो
निज्झाइतो, सेणिएण चिंतियं-सुक्कज्झाणोवगतो एस भयवं, एरिसंमि झाणे कालगयस्स का गई हवइत्ति भयवं पुच्छिस्सं,
ततो गतो, वंदिऊण पुच्छितो णेण भयवं, जंमि ठाणे ठितो वंदितो मए पसन्नचंदो तंमि मयस्स कहिं उववातो भवति ?,
भयवया भणियं-अहेसत्तमाए पुढवीए, ततो सेणिएणं चिंतियं-हा किमेयं ?, पुणो पुच्छिस्सं, एत्थंतरंमि पसन्नचंदस्स माणसे
संगामे पहाणनायगेण सहावडियस्स असिसत्तिचक्ककप्पणिपमुहाणि पहरणाणि खयं गयाणि, ततोऽणेण सिरत्ताणेणं वावा-
एमित्ति परामुसियमुत्तमंगं जाव लोअं कडं पासइ, ततो संवेगमावन्नो महया विसुज्झमाणपरिणामेणं अत्ताणं निंदिउं पवत्तो,
समाहियं पुणरवि अणेण सुक्कज्झाणं, एत्थंतरंमि पुणरवि पुच्छितो सेणिएणं भयवं-जारिसे झाणे संपइ पसन्नचंदो वट्टइ
तारिसे मयस्स कहिं उववातो ?, भगवया भणियं-अणुत्तरेसु, ततो सेणिएण भणियं-पुवं किमन्नहा परूवियं ? उयाहु मया
अन्नहा अवगच्छियं ?, भयवया भणियं-न अन्नहा परूवियं, सेणिएण भणियं-कहमेयंति ?, भयवया सबो वुत्तंतो कहितो,
एत्थंतरे पसन्नचंदसमीवे दिवो देवदुंदुभिसणाहो महंतो कलयलो उद्धाइतो, ततो सेणिएण भणियं-भयवं ! किमेयंति ?,
भयवया भणितं-तस्सेव विसुज्झमाणपरिणामस्स केवलनाणं समुप्पण्णं, ततो से देवा महिमं करेंति, एस एत्र दवविउस्सग्ग-

भावविउस्सग्गेसु उदाहरणं ॥ साम्प्रतं समाप्तौ यथाभूतोऽस्य सामायिकस्य कर्त्ता भवति तथाभूतं सङ्क्षेपतोऽभिधित्सुराह—

सावज्जजोगविरओ तिविहं तिविहेण वोसरिअ पावो । सामाइअमाईए एसोऽणुगमो परिसमत्तो ॥ १०६४ ॥

सावद्ययोगविरतः, कथमित्याह—त्रिविधंत्रिविधेन व्युत्सृज्य—परित्यज्य पापं, पाठांतरं सावद्ययोगविरतः सन् त्रिविधं त्रिविधेन व्युत्सृजति—परित्यजति पापमेव्यत् सामायिकादौ—सामायिकारम्भसमये । एषोऽनुगमः परिसमाप्तः, अथवा सामायिकादौ सूत्रे, आदिशब्दात् सर्वसावद्यं योगं प्रत्याख्यामीत्याद्यवयवपरिग्रहः, उक्तोऽनुगमः, साम्प्रतं नयास्ते च नैगमसङ्ग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूतभेदभिन्नाः खल्वोघतः सप्त भवन्ति, स्वरूपं चैतेषामधो न्यक्षेण प्रदर्शितमिति नेह प्रतन्यते, केवलमत्र स्थानाशून्यार्थमेते ज्ञानक्रियाद्वयान्तर्भावेन समासतः प्रोच्यन्ते, तथा चाह—

विज्जाचरणनएसुं सेससमोआरणं तु कायव्वं । सामाइअनिज्जुत्ती सुभासिअत्था परिसमत्ता ॥ १०६५ ॥

विद्याचरणनययोः, ज्ञानक्रियानययोरित्यर्थः, 'सेससमोयारणं तु कायव्व'मिति शेषनयसमवतारः कर्त्तव्यः, तुशब्दो विशेषणार्थः, स चैतद्विशिनष्टि—तौ च ज्ञाननयक्रियानयौ वक्तव्यौ, एवं सामायिकनिर्युक्तिः सुभाषितार्था परिसमाप्ता ॥

सम्प्रति स्वद्वार एव शेषनयान्तर्भावेनाविष्कृतनामानावनन्तरोपन्यस्तगाथागततुशब्देन चावश्यवक्तव्यतयाऽभिहितौ ज्ञानचरणनयावुच्येते, तत्र ज्ञाननयदर्शनमिदं—ज्ञानमेवैहिकामुष्मिकफलप्राप्तिकारणं प्रधानं, युक्तियुक्तत्वात्, तथा चाह—

नायम्मि गिण्हियव्वे अगिण्हिअव्वम्मि चेव अत्थम्मि । जइअव्वमेव इय जो उवएसो सो णओ नाम ॥ १०६६ ॥

'नायंमि' ज्ञाते सम्यक्परिच्छिन्ने 'ग्रहीतव्ये' उपादेये, 'अगिण्हियव्वंमि'त्ति अग्रहीतव्ये—अनुपादेये, हेये इति भावः,

चशब्दः खलूभयोर्ग्रहीतव्याग्रहीतव्ययोर्ज्ञातत्वानुकर्षणार्थः उपेक्षणीयवस्तुसमुच्चयार्थो वा, एवकारस्त्ववधारणार्थः, तस्य चैवं व्यवहितं प्रयोगो द्रष्टव्यः—ज्ञात एव ग्रहीतव्ये, तथा अग्रहीतव्ये उपेक्षणीये च ज्ञात एव, नाज्ञातेऽर्थे ऐहिकामुष्मिके, तत्र ऐहिको ग्रहीतव्यः स्रक्चन्दनादिः अग्रहीतव्यो विषशस्त्रकण्टकादिः उपेक्षणीयस्तृणादिः, आमुष्मिको ग्रहीतव्यः सम्यग्दर्शनादिः अग्रहीतव्यो मिथ्यात्वादिः उपेक्षणीयो विवक्षया अभ्युदयादिः, तस्मिन्नर्थे यतितव्यमेव, अनुस्वारलोपात् यतितव्यं, एवमनेन क्रमेण ऐहिकामुष्मिकफलप्राप्त्यर्थिना सत्त्वेन प्रवृत्त्यादिलक्षणो यत्नः कार्य इत्यर्थः; इत्थं चैतदङ्गीकर्त्तव्यं, सम्यक् अज्ञाते प्रवर्त्तमानस्य फलविसंवाददर्शनात्, तथा चोक्तमन्यैरपि—"विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता । मिथ्याज्ञानात् प्रवृत्तस्य, फलासंवाददर्शनात् ॥ १ ॥" तथा आमुष्मिकफलप्राप्त्यर्थिनाऽपि ज्ञान एव यतितव्यं, तथा चागमोऽप्येवमेव व्यवस्थितः, यत उक्तम्—"पढमं नाणं तओ दया, एवं चिट्ठइ सव्वसंजए । अन्नाणी किं काहिति ? किंवा नाही छेयपावगं ? ॥ १ ॥" इतश्चैतदेवमङ्गीकर्त्तव्यं, यस्मात् तीर्थकरगणधरैरगीतार्थानां केवलानां विहारक्रियापि निषिद्धा, तथा चागमः—"गीयत्थो य विहारो बीओ गीयत्थमीसितो भणितो । एत्तो तइयविहारो नाणुन्नातो जिणवरेहिं ॥ १ ॥" न खल्वन्धेनान्धः समाकृष्यमाणः सम्यक्पन्थानं प्रतिपद्यते इत्यभिप्रायः, एवं तावत् क्षायोपशमिकं ज्ञानमधिकृत्योक्तं, क्षायिकमप्यङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव वेदितव्यं, यस्मादर्हतोऽपि भवाम्भोधितटस्थस्य दीक्षाप्रतिपन्नस्य उत्कृष्टतपश्चरणवतोऽपि न तावदपवर्गप्राप्तिरुपजायते यावज्जीवाजीवाद्यखिलवस्तुपरिच्छेदरूपं केवलज्ञानं नोत्पन्नमिति, तस्माद् ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति स्थितं, 'इइ जो उवदेसो सो नओ नामं'ति एवमुक्तन्यायेन

य उपदेशो ज्ञानप्राधान्यख्यापनपरः स नयो नाम, ज्ञाननय इत्यर्थः, अयं च चतुर्विधे सम्यक्त्वादिसामायिके सम्यक्त्व-
सामायिकं श्रुतसामायिकं चेच्छति, अस्य ज्ञानात्मकत्वात्, देशविरतिसामायिकं सर्वविरतिसामायिकं तु नेच्छति, तयोस्तत्का-
र्यत्वात्, गुणभूते वेच्छति, उक्तो ज्ञाननयः, सम्प्रति क्रियानयावसरः, तद्दर्शनं चेदं–क्रियैव ऐहिकामुष्मिकफलप्राप्ति-
कारणं प्रधानं, युक्तियुक्तत्वात्, तथा चायमप्युक्तलक्षणामेव स्वपक्षसिद्धये गाथामाह–'नायंमि गिण्हियव्वे' इत्यादि, अस्य
क्रियानयदर्शनानुसारेण व्याख्या–ज्ञाते ग्रहीतव्याग्रहीतव्ये चैव अर्थे ऐहिकामुष्मिकफलप्राप्त्यर्थिना यतितव्यमेव, न
यस्मात् प्रवृत्त्यादिलक्षणप्रयत्नव्यतिरेकेण ज्ञानवतोऽप्यभिलषितार्थावाप्तिरुपलभ्यते, तथा चोक्तमन्यैरपि–"क्रियैव फलदा
पुंसां, न ज्ञानं फलदं मतम्। यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात् सुखितो भवेत् ॥ १ ॥" तथाऽऽमुष्मिकफलप्राप्त्यर्थि-
नापि क्रियैव कर्त्तव्या, तथा च भगवद्वचनमप्येवमेव व्यवस्थितं, यत उक्तम्–"चेइयकुलगणसंघे आयरियाणं च पवयण
सुए य। सव्वेसुवि तेण कयं तवसंजममुज्जमंतेणं ॥ १ ॥" इतश्चैतदेवमङ्गीकरणीयं, यस्मात्तीर्थकरगणधरैः क्रियाविकलानां
ज्ञानमपि विफलमेवोक्तं, तथा चागमः–सुबहुंपि सुयमहीयं किं काहिइ चरणविप्पहीणस्स ?। अंधस्स जह पलित्ता दीव-
सयसहस्सकोडीवि ॥ १ ॥" दर्शिक्रियाविकलत्वात् तस्येत्यभिप्रायः, एवं तावत् क्षायोपशमिकं चारित्रमङ्गीकृत्योक्तं, चारित्रं
क्रियेत्यनर्थान्तरं, क्षायिकमप्यङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव विज्ञेयं, यस्मादर्हतोऽपि भगवतः समुत्पन्नकेवलज्ञान-
स्यापि न तावत् मुक्त्यवाप्तिः सम्भवति यावदखिलकर्मेन्धनानलभूता पञ्चह्रस्वाक्षरोद्गिरणकालमात्रावस्थायिनी सर्वसं-
वररूपा चारित्रक्रिया नावाप्यते, ततः क्रियैव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति स्थितं, 'इइ जो उवदेसो सो

नयो नाम'ति एवमुक्तेन न्यायेन य उपदेशः क्रियायाः प्राधान्यख्यापनपरः स नयो नाम, क्रियानय इत्यर्थः, अयं चतुर्विधे सामायिके देशविरतिसर्वविरतिरूपं सामायिकद्वयमेवेच्छति, क्रियाप्रधानत्वादस्य, सम्यक्त्वसामायिकश्रुतसामायिके तु तदर्थमुपादीयमानत्वेनाप्रधानत्वान्नेच्छति, गुणभूते वा इच्छतीति, उक्तः क्रियानयः, इत्थं ज्ञाननयक्रियानयस्वरूपं श्रुत्वाऽविदिततदभिप्रायो विधेयः संशयापन्नः सन्नाह–किमत्र तत्त्वं ?, पक्षद्वयेऽपि युक्तिसम्भवात्, आचार्यः पुनराह—

सव्वेसिंपि नयाणं बहुविहवत्तव्वयं निसामित्ता । तं सव्वनयविसुद्धं जं चरणगुणट्ठिओ साहू ॥ १०६७ ॥

अथवा ज्ञानक्रियानयमतं प्रत्येकमभिधायाधुना स्थितपक्षमुपदर्शयति–'सव्वेसिंपि नयाण'मित्यादि, सर्वेषामपि–मूलनयानां, अपिशब्दात् तद्भेदानां द्रव्यास्तिकादीनां बहुविधवक्तव्यतां–सामान्यमेव विशेषा एव उभयमेव परस्परमनपेक्षमित्यादिरूपं, अथवा नामादिनयानां मध्ये को नयः कं साधुमिच्छतीत्यादिरूपां निशम्य–श्रुत्वा तत् सर्वनयविशुद्धं–सर्वनयसम्मतं वचनं यच्चरणगुणस्थितः साधुः, यस्मात्सर्वे नयास्तत्त्वतो भावनिक्षेपमिच्छंतीति ॥

इति श्रीमलयगिरिविरचितायामावश्यकटीकायां सामायिकाध्ययनं समाप्तम् ॥

सामायिकस्य विवृतिं कृत्वा यदवाप्तमिह मया कुशलम् । तेन खलु सर्वलोको लभतां सामायिकं परमम् ॥ १ ॥

यस्माज्जगाद भगवान् सामायिकमेव निरुपमोपायम् । शारीरमानसानेकदुःखनाशस्य मोक्षस्य ॥ २ ॥ ग्रन्थाग्रं २२०००

इति श्रीमलयगिरिविरचितायामावश्यकबृहद्वृत्तौ सामायिकाध्ययनं समाप्तम् ।

इत्याचार्यश्रीमलयगिरिविरचितायामावश्यकबृहद्वृत्तौ
सामायिकाध्ययनविवरणं ॥

# अथ चतुर्विंशतिस्तवाख्यं द्वितीयमध्ययनं ॥

तदेवमुक्तं सामायिकाध्ययनम्, अधुना चतुर्विंशतिस्तवाध्ययनं प्रारभ्यते—

तत्राध्ययनोद्देशसूत्रारम्भेषु सर्वेष्वेव कारणाभिसम्बन्धौ वक्तव्याविलेष वृद्धप्रवादः, ततः प्रथमतः कारणमुच्यते, तच्चेदं—जात्यादिगुणसम्पत्समन्वितेभ्यो विनेयेभ्यो गुरुणा सूत्रतोऽर्थतश्चावश्यकश्रुतस्कन्धः प्रदातव्यः, स चाध्ययनसमुदायरूपः, तथा चोक्तम्—'एत्तो एकेक्कं पुण अज्झयणं कित्तइस्सामि'त्ति, प्रथमं चाध्ययनं सामायिकं, तच्चोपदर्शितम्, इदानीं द्वितीयं चतुर्विंशतिस्तवाध्ययनमारभ्यते, द्वितीयता चास्य द्वितीयावयवत्वात्, द्वितीयावयवत्वमप्यस्य सिद्धमाचार्योपदर्शिताधिकारगाथाप्रामाण्यात्, सा चेयम्—"सावज्जजोगविरई उक्कित्तण गुणवंतो य पडिवत्ती। खलियस्स निंदणा वणतिगिच्छ गुणधारणा चेव ॥ १ ॥" इयमत्र भावना—यथा किल युगपदशक्योपलम्भस्य पुरुषस्य दिदृक्षोः क्रमेणांगान्युपदर्श्यन्ते, एवमत्राप्यावश्यकश्रुतस्कन्धस्य क्रमेण सामायिकादीन्यङ्गान्युपदर्श्यन्ते इति, इदमेव कारणमुद्देशसूत्रेष्वपि योजनीयं, एतदेव च सर्वाध्ययनेषु, न पुनर्भेदेन वक्ष्यामः, सम्प्रति सम्बन्ध उच्यते—इहानन्तराध्ययने सावद्ययोगविरतिलक्षणं सामायिकमुपदिष्टं, इह तु तदुपदेष्टॄणामर्हतामुत्कीर्त्तनं प्रतिपाद्यते, अथवा सामायिकाध्ययने तदासेवनात् कर्म्मक्षय उक्तः, यत उक्तं निरुक्तिद्वारे—"सम्मद्दिट्ठी अमोहो सोही सब्भाव दंसणं बोही। अविवज्जओ सुदिट्ठित्ति एवमाई निरुत्ताई ॥१॥"

शोधिः कर्म्मक्षय इत्यनर्थांतरं, इहापि चतुर्विंशतिस्तवाध्ययने भगवदर्हद्गुणोत्कीर्त्तनरूपाया भक्तेस्तत्त्वतोऽसावेव कर्म्म-
क्षयः प्रतिपाद्यते, तथा च वक्ष्यति–"भत्तीएँ जिणवराणं खिज्जंती पुवसंचिया कम्मा' इत्यादि, एवमनेन सम्बन्धेनायात-
स्यास्य चतुर्विंशतिस्तवाध्ययनस्य चत्वार्यनुयोगद्वाराणि प्रपञ्चतो वक्तव्यानि, तत्र नामनिष्पन्ने निक्षेपे चतुर्विंशतिस्तवाध्य-
यनमिति नाम, ततश्चतुर्विंशतिस्तवाध्ययनशब्दाः प्ररूपणीयाः, तथाचाह—

चउवीसगत्थयस्स उ निक्खेवो होइ नामनिप्फन्नो। चउवीसगस्स छक्को थयस्स उ चउक्कओ होइ ॥ १०६८ ॥

चतुर्विंशतिस्तवस्य निक्षेपो नामनिष्पन्नो भवति, स चान्यस्याश्रुतत्वादयमेव यदुत चतुर्विंशतिस्तव इति, तुशब्दो वा-
क्यभेदोपदर्शनार्थः, वाक्यभेदश्च अध्ययनान्तरवक्तव्यताया उपक्षेपादिति, तत्र चतुर्विंशतिशब्दस्य निक्षेपः षड्विधः, स्तव-
शब्दस्य चतुर्विधः, तुशब्दस्यानुक्तसमुच्चयार्थत्वादध्ययनस्य च, एष गाथासमासार्थः। अवयवार्थं तु भाष्यकार एव
वक्ष्यति, तत्राद्यमवयवमधिकृत्य निक्षेपोपदर्शनार्थमाह—

नामंठवणादविए खित्ते काले तहेव भावे य। चउवीसगस्स एसो निक्खेवो छव्विहो होइ ॥ १९२ ॥ (भा.)

'नामं'ति नामचतुर्विंशतिः स्थापनाचतुर्विंशतिर्द्रव्यचतुर्विंशतिः क्षेत्रचतुर्विंशतिः कालचतुर्विंशतिस्तथैव भावचतुर्विं-
शतिः, चतुर्विंशतिशब्दस्य एषोऽनन्तरोदितो निक्षेपः षड्विधो भवति। तत्र नामचतुर्विंशतिः जीवस्य अजीवस्य वा यस्य
चतुर्विंशतिरिति नाम क्रियते, चतुर्विंशत्यक्षरावली वा, स्थापनाचतुर्विंशतिश्चतुर्विंशतेः केषांचित्स्थापना, द्रव्यचतुर्विंश-
तिश्चतुर्विंशतिर्द्रव्याणि, सचित्ताचित्तमिश्रभेदभिन्नानि, तत्र सचित्तानि द्विपदचतुष्पदापदभेदभिन्नानि, अचित्तानि

चतुर्विंशत्यादेर्निक्षेपः

कार्षापणादीनि, मिश्राणि द्विपदादीन्येव कटकाद्यलङ्कृतानि, क्षेत्रचतुर्विंशतिर्विवक्षया चतुर्विंशतिः क्षेत्राणि भरतादीनि, क्षेत्रप्रदेशा वा चतुर्विंशतिः क्षेत्रचतुर्विंशतिः, चतुर्विंशतिप्रदेशावगाढं वा द्रव्यं क्षेत्रचतुर्विंशतिः, कालश्चतुर्विंशतिश्चतुर्विंशतिः समयादयः, एतत्कालस्थिति वा द्रव्यं कालचतुर्विंशतिः, भावचतुर्विंशतिः चतुर्विंशतिर्भावसंयोगाः, चतुर्विंशतिगुणकृष्णादिद्रव्यं वा भावचतुर्विंशतिः, इह सचित्तद्विपदमनुष्यचतुर्विंशत्याऽधिकार इति गाथार्थः ॥ उक्ता चतुर्विंशतिः, अधुना स्तवनिक्षेपप्रतिपादनार्थमाह—

नामंठवणादविए भावे य थयस्स होइ निक्खेवो । दव्वत्थओ पुप्फाई संतगुणकित्तणा भावे ॥ १९३ ॥ (भा.)

'नामं'ति नामस्तवः स्थापनास्तवः द्रव्यविषयो द्रव्यस्तवः 'भावे ये'ति भावविषयो भावस्तवः, इत्थं स्तवस्य निक्षेपो—न्यासो भवति चतुष्प्रकार इति शेषः, तत्र क्षुण्णत्वान्नामस्थापने अनादृत्य द्रव्यस्तवभावस्तवस्वरूपमाह—द्रव्यस्तवः पुष्पादिः, आदिशब्दात् गन्धधूपादिपरिग्रहः, कारणे कार्योपचाराच्चैवमाह, अन्यथा द्रव्यस्तवः पुष्पादिभिः समभ्यर्चनमिति द्रष्टव्यं, तथा सद्गुणोत्कीर्त्तना भाव इति, सन्तश्च ते गुणाश्च सद्गुणाः, अनेनासत्सु गुणेषूत्कीर्त्तनानिषेधमाह, करणे मृषावाददोषप्रसङ्गात्, सद्गुणानामुत्कीर्त्तना उत्—प्राबल्येन परया भक्त्या कीर्त्तना—संशब्दना यथा—'प्रकाशितं यथैकेन, त्वया सम्यक् जगत्त्रयम् । समग्रैरपि नो नाथ !, परतीर्थाधिपैस्तथा ॥ १ ॥ विद्योतयति वा लोकं, यथैकोऽपि निशाकरः । समुद्गतः समग्रोऽपि, किं तथा तारकागणः ? ॥ २ ॥" इत्यादिलक्षणो भावे इति द्वारपरामर्शो, भावस्तव इत्यर्थः ॥ इह चालितप्रतिष्ठितोऽर्थः सम्यग्ज्ञानाय प्रभवतीति चालनां कदाचिद् विनेयः करोति, कदाचित्स्वयमेव गुरु-

रपि; तथा चोक्तम्—"कत्थइ पुच्छइ सीसो कहिंचऽपुट्ठा कहिंति आयरिया ॥" इत्यादि, तत्र वित्तपरित्यागादिना द्रव्य-
स्तव एव ज्यायानित्यल्पबुद्धीनामाशङ्कासम्भवः, तद्व्युदासार्थं तदनुवादपुरस्सरमाह—

दव्वत्थओ भावत्थओ दव्वथओ बहुगुणत्ति बुद्धि सिआ ।
अनिउणमइवयणमिणं छज्जीवहिअं जिणा विंति ॥ १९४ ॥ (भा.)
छज्जीवकायसंजम दव्वथए सो विरुज्झई कसिणो । तो कसिणसंजमविऊ पुप्फाईअं न इच्छंति ॥ १९५ ॥ (भा.)

द्रव्यस्तवो भावस्तव इत्यनयोर्मध्ये द्रव्यस्तवो बहुगुणः—प्रभूतगुण इत्येवं बुद्धिः स्याद्, एवं चेन्मन्यसे इति भावः,
तथाहि—किलास्मिन् क्रियमाणे वित्तपरित्यागाच्छुभ एवाध्यवसायः तीर्थस्य चोन्नतिकरणं, दृष्ट्वा च तं क्रियमाणमन्येऽपि
प्रतिबुध्यन्ते इति स्वपरानुग्रहः, सर्वमिदं सप्रतिपक्षं चेतसि निधाय द्रव्यस्तवो बहुगुण इत्यस्यासारतारव्यापनायाह—अ-
निपुणमतिवचनमिदमिति, अनिपुणमतेर्वचनमिदं यत् द्रव्यस्तवो बहुगुण इति, किमित्यत आह—'षड्जीवहितं'
षण्णां—पृथिवीकायिकादीनां जीवानां हितं जिनाः—तीर्थकृतो ब्रुवते ॥ किं षड्जीवहितमित्यत आह—षण्णां जीवनि-
कायानां—पृथिव्यादिलक्षणानां संयमः—सङ्घट्टनापरित्यागः षड्जीवकायसंयमः असौ हितं, यदि नामैवं ततः किमि-
त्यत आह—'द्रव्यस्तवे' पुष्पादिसमभ्यर्चनलक्षणे 'सः' षड्जीवकायसंयमः 'कृत्स्नः' सम्पूर्णो 'विरुध्यते' न सम्यक्
सम्पद्यते, पुष्पादिसंलुञ्चनसङ्घट्टनादिना कृत्स्नसंयमव्याघातभावात्, यतश्चैवं 'तो'त्ति तस्मात् कृत्स्नसंयमं प्रधानं
विद्वांसः, ते तत्त्वतः साधव उच्यन्ते, कृत्स्नसंयमग्रहणमकृत्स्नसंयमविदुषां श्रावकाणां व्यपोहार्थं, पुष्पादिकं द्रव्यस्तवं

स्तवनि
भावस्त
धिक्यं

॥५९०॥

नेच्छन्ति-न बहु मन्यन्ते, यच्चोक्तं-'द्रव्यस्तवे क्रियमाणे वित्तपरित्यागात् शुभ एवाध्यवसाय' इत्यादि, तदपि यत्किञ्चित्, व्यभिचारात्, कस्यचिदल्पसत्त्वस्य अविवेकिनो वा शुभाध्यवसायानुपपत्तेः, दृश्यते यशःकीर्त्याद्यर्थमपि सत्त्वानां द्रव्यस्तवे प्रवृत्तिः, शुभाध्यवसायभावे तु स एव भावस्तवः, इतरस्तु तत्कारणत्वेनाप्रधानमिति, तथा भावस्तव एव सति तत्त्वतस्तीर्थस्योन्नतिकरणं, भावस्तववतः सम्यगमरादिभिरपि पूज्यत्वात्, तमेव च दृष्ट्वा क्रियमाणमन्ये सुतरां प्रतिबुध्यंते इति स्वपरानुग्रहोऽपीहैवेति गाथाद्वयभावार्थः ॥ आह-यद्येवं किमयं द्रव्यस्तव एकान्ततो हेय एव वर्त्तते ?, आहोस्विदुपादेयोऽपीति ?, उच्यते, साधूनां हेय एव, श्रावकाणामुपादेयोऽपि, तथा चाह—

अकसिणपवत्तगाणं विरयाविरयाण एस खलु जुत्तो । संसारपयणुकरणो दव्वथओ कूवदिट्ठंतो ॥ १९६ ॥ (भा.)

अकृत्स्नं, संयममिति सामर्थ्यात् गम्यते, प्रवर्त्तयन्तीत्यकृत्स्नप्रवर्त्तकास्तेषां, विरताविरतानां श्रावकाणामेष-द्रव्यस्तवः खलु युक्त एव, खलुशब्दस्यावधारणार्थत्वात्, किंकृदयमित्याह-संसारप्रतनुकरणः, संसारक्षयकारक इति भावः, आह-यः प्रकृत्यैवासुन्दरः स कथं श्रावकाणामपि युक्तः ?, उच्यते, अत्र कूपदृष्टान्तः, जहा नवनगराइसंनिवेसे केई पभूतजलाभावतो तण्हादिपरिगया तदपनोदार्थं कूवं खणंति, तेसिं च जइवि तण्हाइया वड्ढंति मट्टियाकद्दमादीहि य मलिणिज्जंति तहावि तदुब्भवेणं चेव पाणीएणं तेसिं ते तिण्हाइया सो य मलो पुव्वगो य फिट्टइ, सेसकालं च ते तदन्ने य लोगा सुहभागिणो य भवन्ति, एवं दव्वत्थए जइवि असंजमो तहावि ततो चेव सा परिणामवुद्धी भवति जा असंजमोवज्जियं अन्नं च निरवसेसं खवेंति, तम्हा विरताविरतेहिं एस दव्वत्थओ कायव्वो, सुभाणुबंधी पभूयतरनिज्जराफलो यत्ति, उक्तः स्तवः ।

अत्रान्तरेऽध्ययनशब्दार्थो निरूपणीयः, स चानुयोगद्वारचिन्तायां न्यक्षेण निरूपित एवेति नेह प्रतन्यते । सम्प्रति सूत्रालापकनिष्पन्ननिक्षेपावसरः, स च सूत्रे भवति, सूत्रं चानुगमे, स चानुगमो द्विधा—सूत्रानुगमो निर्युक्त्यनुगमश्च, तत्र निर्युक्त्यनुगमस्त्रिविधः, तद्यथा—निक्षेपनिर्युक्त्यनुगम उपोद्घातनिर्युक्त्यनुगमः सूत्रस्पर्शकनिर्युक्त्यनुगमश्च, तत्र निक्षेपनिर्युक्त्यनुगमोऽनुगतो वक्ष्यते च, उपोद्घातनिर्युक्त्यनुगमस्त्वाभ्यां द्वारगाथाभ्यां समवगन्तव्यः, तद्यथा—'उद्देसे निद्देसे य निग्गमे' इत्यादि, 'किं कइविहं कस्स कहिं'मित्यादि, सूत्रस्पर्शकनिक्षेपनिर्युक्त्यनुगमस्तु सूत्रे सति भवति, सूत्रं च सूत्रानुगमे, स चावसरप्राप्त एव, युगपच्च सूत्रादयो व्रजंति, तथा चोक्तम्—"सुत्तं सुत्ताणुगमो सुत्तालावयकतो अ निक्खेवो । सुत्तप्फासियनिज्जुत्ति नया य समगं तु वच्चंति (विशे. २८०९) विषयविभागः पुनरयममीषां वेदितव्यो—"होइ कयत्थो वोत्तुं सपयच्छेयं सुयं सुयाणुगमो । सुत्तालावगनासो नामाइन्नासविणियोगं ॥ १ ॥ सुत्तप्फासियनिज्जुत्तिनियोगो सेसओ पयत्थादी । पायं सो च्चिय नेगमनयाइमयगोयरो भणितो ॥ २ ॥" (विशे. १००९–१०) अत्राक्षेपपरिहारा न्यक्षेण सामायिकाध्ययने एव निरूपिता इति नेह वितन्यन्ते, तत्र सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयम्, तच्चेदम्—

लोगस्स उज्जोयगरे, धम्मतित्थयरे जिणे । अरिहंते कित्तइस्सं, चउवीसंपि केवली ॥ १ ॥ (सूत्रं)

अस्य व्याख्या, तल्लक्षणं चेदं—"संहिता च पदं चैव, पदार्थः पदविग्रहः । चालना प्रत्यवस्थानं, व्याख्या सूत्रस्य षड्विधा ॥ १ ॥" तत्रास्खलितपदोच्चारणं संहिता, सा च प्रतीता, अधुना पदानि—लोकस्य उद्योतकरान् धर्मतीर्थकरान् जिनान् अर्हतः कीर्तयिष्यामि चतुर्विंशतिमपि केवलिन इति । अधुना पदार्थः—लोक्यते—प्रमाणेन दृश्यते इति लोकः,

अयं चेह तावत् पञ्चास्तिकायात्मको गृह्यते, तस्य लोकस्य उद्योतकरणशीला उद्योतकरास्तान्, केवलालोकेन तत्पूर्वक-
वचनदीपेन वा सर्वलोकप्रकाशकरणशीलानित्यर्थः, तथा दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्म्मः, उक्तं च—"दुर्गतिप्रसृ-
तान् जन्तून्, यस्माद् धारयते ततः । धत्ते चैतान् शुभे स्थाने, तस्माद्धर्म्म इति स्मृतः ॥१॥" तीर्यते संसारसागरोऽनेनेति
तीर्थं, धर्म्म एव धर्म्मप्रधानं वा तीर्थं धर्म्मतीर्थं तत्करणशीला धर्म्मतीर्थंकरास्तान्, तथा रागद्वेषकषायेन्द्रियपरीषहोप-
सर्गाष्टप्रकारकर्म्मजेतृत्वाज्जिनास्तान्, अशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हतीत्यर्हन्तस्तान् अर्हतः, कीर्त्तयिष्यामि—
स्वनामभिः स्तोष्ये, चतुर्विंशतिः सङ्ख्या, अपिशब्दो भावतस्तदन्यसमुच्चयार्थः, केवलं ज्ञानमेषां विद्यत इति केवलिनः
तान् केवलिनः, इति पदार्थः, पदविग्रहोऽपि यानि समासभाञ्जि पदानि तेषु दर्शित एव । सम्प्रति चालनावसरः—तत्र सा
तावत् तिष्ठतु, सूत्रस्पर्शनिर्युक्तिरेवोच्यते, स्वस्थानत्वात्, उक्तं च—"अक्खलियसंहियाई वक्खाणचउक्कए दरिसियंमि ।
सुत्तप्फासियनिज्जुत्तिवित्थरत्थो इमो होइ ॥ १ ॥" चालनामपि चात्रैव वक्ष्यामः, तत्र 'लोकस्योद्योतकरा'निति यदुक्तं
तत्र लोकनिरूपणायाह—

नामंठवणादविए खित्ते काले भवे य भावे य । पज्जवलोगे य तहा अट्ठविहो लोगनिक्खेवो ॥ १०६९ ॥

नामलोकः स्थापनालोकः द्रव्यलोकः क्षेत्रलोकः काललोकः भवलोकः भावलोकः पर्यायलोकश्च, एवमष्टविधो लोकनिक्षेप
इति गाथासमासार्थः, व्यासार्थन्तु भाष्यकार एव वक्ष्यति, तत्र नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यलोकमभिधित्सुराह—

जीवमजीवे रूवमरूवी सपएसमप्पएसे य । जाणाहि दव्वलोगं निच्चमनिच्चं च जं दव्वं ॥ १९७ ॥ (भा.)

जीवाजीवावित्यत्रानुस्वारः प्राकृतत्वादलाक्षणिकः, तत्र सुखदुःखज्ञानोपयोगलक्षणो जीवः, विपरीतस्त्वजीवः, एतौ च द्वौ भेदौ प्रत्येकं रूप्यरूपिभेदौ, तथा चाह–'रूप्यरूपिण' इति, तत्रानादिकर्म्मसन्तानपरिगता रूपिणः, अरूपिणस्तु कर्म्मरहिताः सिद्धाः, अजीवास्तेऽरूपिणो धर्म्माधर्म्माकाशास्तिकायाः, रूपिणः परमाण्वादयः, एतौ च जीवाजीवावोघतः सप्रदेशाप्रदेशावगन्तव्यौ, तथा चाह–'सप्रदेशाप्रदेशा' विति, तत्र परमाणुव्यतिरेकेण सर्वेऽप्यस्तिकायाः सप्रदेशाः, परमाणवस्त्वप्रदेशाः, अथवा पुद्गलास्तिकायो द्रव्याद्यपेक्षया चिन्तनीयः, तद्यथा–द्रव्यतः परमाणुरप्रदेशः द्व्यणुकादयः सप्रदेशाः, क्षेत्रत एकप्रदेशावगाढोऽप्रदेशः द्व्यादिप्रदेशावगाढाः सप्रदेशाः, कालत एकसमयस्थितिकोऽप्रदेशो द्व्यादिसमयस्थितिकाः सप्रदेशाः, भावत एकगुणकृष्णादिकोऽप्रदेशः द्विगुणकृष्णादिकाः सप्रदेशाः, इदमेव जीवाजीवव्रातं जानीहि द्रव्यलोकं, द्रव्यमेव लोको द्रव्यलोकस्तं, अस्यैव शेषधर्म्मोपदर्शनायाह–नित्यानित्यं यद्द्रव्यं, चशब्दादभिलाप्यानभिलाप्यादिसमुच्चयः ॥ साम्प्रतं जीवाजीवयोर्नित्यतानित्यतामेवोपदर्शयति—

गइ १ सिद्धा २ भविआया ३ अभविअ ४ पुग्गल १ अणागयद्धा २ य ।

तीअद्ध ३ तिन्नि काया ४ जीवाजीवट्ठिई चउहा ॥ १९८ ॥ (भा.)

अस्या सामायिकाध्ययन इव व्याख्या कर्त्तव्या ॥ अधुना क्षेत्रलोकः प्रतिपाद्यते—

आगासस्स पएसा उड्ढे य अहे अ तिरिअलोए अ। जाणाहि खित्तलोगं अणंत जिणदेसियं सम्मं ॥१९९॥ (भा.)

प्रकृष्टाः देशाः प्रदेशाः आकाशस्य प्रदेशान् ऊर्ध्वं चेति ऊर्ध्वलोके अधश्चेति अधोलोके तिर्यग्लोके च जा-

नीहि क्षेत्रलोकं क्षेत्रमेव लोकः क्षेत्रलोकः तं, ऊर्ध्वादिविभागस्तु प्रतीतः, अनन्तं—अंतरहितमलोकाकाशस्यापरिमितत्वात्, अत्र सूत्रेऽनुस्वारलोपः प्राकृतत्वादवसेयः, जिनदेशितं सर्वज्ञकथितं सम्यक् शोभनेन विधिना ॥ साम्प्रतं काललोकप्रतिपादनार्थमाह—

समयावलिअमुहुत्ता दिवसमहोरत्त पक्ख मासा य ।
संवच्छर जुग पलिआ सागर ओसप्पि परियट्टा ॥ २०० ॥ (भा.)

परमनिकृष्टः कालः समयः, असङ्ख्येयसमयात्मिका आवलिका, द्विघटिको मुहूर्त्तः, द्वादशादिमुहूर्त्तो दिवसः, त्रिंशन्मुहूर्त्तोऽहोरात्रः, पञ्चदश अहोरात्राणि पक्षः, द्वौ पक्षौ मासः, द्वादश मासा संवत्सरः, पञ्चसंवत्सरं युगं, पल्योपमं उद्धारादिभेदात् त्रिविधं, पल्योपमानां दशकोटीकोट्यः सागरोपमं, दशसागरोपमकोटीकोटीपरिमाणा उत्सर्प्पिणी, एवमवसर्प्पिण्यपि द्रष्टव्या, परावर्त्तः पुद्गलपरावर्त्तः, स चानन्तोत्सर्प्पिण्यवसर्पिणीप्रमाणः, ते अनन्ता अतीतः कालः, अनन्ता एवानागतः कालः ॥ उक्तः काललोकः, काल एव लोकः काललोकः ॥ अधुना भवलोकमभिधित्सुराह—

नेरइयदेवमणुआ तिरिक्खजोणीगया य जे सत्ता । तम्मि भवे वट्टंता भवलोगं तं विआणाहि ॥ २०१ ॥ (भा.)

नैरयिकदेवमनुष्यास्तिर्यग्योनिगताश्च ये सत्त्वाः—प्राणिनस्तस्मिन् भवे वर्त्तमाना यदनुभावमनुभवन्ति तं भवलोकं जानीहि, भव एव लोको भवलोक इति व्युत्पत्तेः ॥ साम्प्रतं भावलोकमुपदर्शयति—

ओदइए उवसमिए खइए अ तहा खओवसमिए अ । परिणामि सन्निवाए छव्विहो भावलोगो य ॥२०२॥ (भा.)

कर्म्मण उदयेन निर्वृत्तः औदयिकः, तथा उपशमेन, कर्म्मण इति गम्यते, निर्वृत्त औपशमिकः, क्षयेण निर्वृत्तः
क्षायिकः; तथा उदितकर्मांशस्य क्षयेण अनुदितस्योपशमेन निर्वृत्तः क्षायोपशमिकः, परिणाम एव पारिणामिकः, सन्निपातो-
द्वित्रिभावानां संयोगः, सन्निपाते भवः सान्निपातिकः, स च ओघतोऽनेकभेदोऽवसेयः, अविरुद्धास्तु पञ्चदश भेदाः, उक्तं
च—"ओदइयखतोवसमे परिणामेक्केक गतिचउक्केवि । खयजोगेणवि चउरो तदभावे उवसमेणंपि ॥ १ ॥ उवसमसेढी एक्को
केवलिणोऽवि य तहेव सिद्धस्स । अविरुद्धसन्निवाइय भेदा एमेव पन्नरस ॥ २ ॥" एवमनेन प्रकारेण षड्विधः—षट्प्रकारो
भावलोकः, भाव एव लोको भावलोकः ॥

तिव्वो रागो य दोसो य, उइन्नो जस्स जंतुणो । जाणाहि भावलोगं अणंतजिणदेसिअं सम्मं ॥ २०३ ॥ (भा.)

तीव्रः—उत्कटो रागः—अभिष्वङ्गलक्षणो द्वेषः—अप्रीतिलक्षणो यस्य जन्तोः प्राणिन उदीर्णस्तं प्राणिनं तेन भावेन
लोक्यत्वात् जानीहि भावलोकमनन्तजिनदेशितं एकवाक्यतया अनन्तजिनकथितं सम्यक्—अवैपरीत्येन ॥ सम्प्रति
पर्यायलोको वक्तव्यः, तत्रौघतः पर्याया धर्मा उच्यन्ते, इह पुनर्नैगमनयदर्शनं मूढनयदर्शनं चाधिकृत्य पर्यायलोकमाह—

दव्वगुणखित्तपज्जवभवाणुभावे अ भावपरिणामे । जाण चउव्विहमेअं पज्जवलोअं समासेण ॥ २०४ ॥ (भा.)

द्रव्यस्य गुणा—रूपादयः तथा क्षेत्रस्य पर्याया—अगुरुलघवः, भरतादिभेदा इत्यन्ये, भवस्य—नरकादेरनुभावाः—तीव्रत-
मदुःखादिरूपाः, तथा चोक्तम्—"अच्छिनिमीलियमेत्तं नत्थि सुहं दुक्खमेव पडिबद्धं । नरए नेरइयाणं अहोनिसं पच्चमा-
णाणं ॥ १ ॥ असुभा उव्वियणिज्जा सद्दरसा रूवगंधफासा य । नरए नेरइयाणं दुक्कयकम्मोवलित्ताणं ॥ २ ॥" इत्यादि,

एवं शेषभवानुभावा अपि वाच्याः, तथा भावस्य—जीवाजीवादिसम्बन्धिनः परिणामाः—तेन तेन अज्ञानात् ज्ञानं नीलालोहितमित्यादिप्रकारेण भवनानि भावपरिणामाः, एवमेनं चतुर्विधमोघतः पर्यायलोकं समासेन सङ्क्षेपेण जानीहि अवबुध्यस्व ॥ तत्र यदुक्तं द्रव्यगुणा इत्यादि तदुपदर्शनेन निगमयन्नाह—

वन्नरसगंधसंठाण—फासठाणगइवन्नभेए य। परिणामे य बहुविहे पज्जवलोगं विआणाहि (समासेणं)॥२०५॥(भा.)

वर्णरसगन्धसंस्थानस्पर्शस्थानगतिवर्णभेदान्, चशब्दात् रसगन्धसंस्थानादिभेदांश्च, इयमत्र भावना—वर्णादयः सप्रभेदा ग्रहीतव्याः, तत्र वर्णस्य भेदाः कृष्णादयः पञ्च, रसस्यापि तिक्तादयः पञ्च, गन्धस्य सुरभीतररूपौ द्वौ भेदौ, संस्थानं परिमण्डलादिभेदात् पञ्चधा, स्पर्शः कठिनादिभेदादष्टधा, स्थानमवगाहनालक्षणं, तद् आश्रयप्रदेशभेदादनेकधा, गतिर्द्विधास्पृशद्गतिरस्पृशद्गतिश्च, अथवा चशब्दः कृष्णादिवर्णादीनां स्वभेदापेक्षया एकगुणकृष्णाद्यनेकभेदोपसङ्ग्रहार्थः, अनेन किल द्रव्यगुणा इत्येतद् व्याख्यातं, परिणामांश्च बहुविधानित्यनेन तु चरमद्वारम्, शेषद्वारद्वयं पुनः स्वयमेव भावनीयं, परिणामांश्च बहुविधानिति जीवाजीवभावगोचरान्, किमित्यत आह— पर्यायलोकं जानीहि, पर्याय एव लोकः पर्यायलोक इति व्युत्पत्तेः ॥ सम्प्रति लोकपर्यायशब्दान् निरूपयति—

आलुक्कई पलुक्कइ लुक्कइ संलुक्कई य एगट्ठा। लोगो अट्ठविहो खलु तेणेसो वुच्चई लोगो ॥ १०७० ॥

आलोक्यते इत्यालोकः, प्रलोक्यते इति प्रलोकः, लोक्यते इति लोकः, संलोक्यते इति संलोकः, एते चत्वारोऽपि

शब्दा एकार्थिकाः, यत एवं लोकशब्दस्य व्युत्पत्तिः—लोक्यते इति लोकः, आलोकादयश्च पर्यायाः, तेन कारणेन अष्टविधः खलु लोको लोक उच्यते ॥ व्याख्यातो लोकः, साम्प्रतं उद्योत उच्यते, अत्राह—

दुविहो खलु उज्जोओ नायव्वो दव्वभावसंजुत्तो । अग्गी दव्वुज्जोओ चंदो सूरो मणी विज्जू ॥ १०७१ ॥

'द्विविधो' द्विप्रकारः, खलुशब्दो मूलभेदापेक्षया न व्यक्त्यपेक्षयेतिविशेषणार्थः, उद्योत्यते—प्रकाश्यतेऽनेनेति उद्योतो ज्ञातव्यो विज्ञेयो द्रव्यभावसंयुक्तः, द्रव्योद्योतो भावोद्योतश्चेति भावः, तत्र द्रव्योद्योतोऽग्निश्चन्द्रः सूर्यो मणिः—चन्द्रकान्तादिलक्षणो विद्युत् प्रतीता, एते द्रव्योद्योतः, एतैर्घटादीनामुद्योतेऽपि तद्गतायाः सम्यक्प्रतिपत्तेरभावात् सकलवस्तुधर्म्मानुद्योतनाच्च, न ह्यग्न्यादिभिः सदसन्नित्यानित्याद्यनन्तधर्मात्मकस्य वस्तुनः सर्वे एव धर्म्माः धर्म्मास्तिकायादयो वा द्योत्यन्ते, तस्मादग्न्यादयो द्रव्योद्योत इति ॥ अधुना भावोद्योतमाह—

नाणं भावुज्जोओ जह भणियं सव्वभावदंसीहिं । तस्स उवओगकरणे भावुज्जोअं विआणाहि ॥ १०७२ ॥

ज्ञायते यथावस्थितं वस्त्वनेनेति ज्ञानं, ततो भावोद्योतः, तेन घटादीनामुद्योतने तद्गतायाः सम्यक्प्रतिपत्तेर्निश्चयप्रतिपत्तेश्च भावात्, तस्य तदात्मकत्वात्, एतावता चाविशेषेणैव ज्ञानं भावोद्योत इति प्राप्तमत आह—यथा भणितं यथावस्थितं सर्वभावदर्शिभिः, तथा यत् ज्ञानं, सम्यग्ज्ञानमिति भावः, तदपि नाविशेषेणोद्योतः, किन्तु ?, तस्य ज्ञानस्योपयोगे करणे सति भावोद्योतं विजानीहि, नान्यदा, तदैव तस्य वस्तुनो ज्ञातत्वसिद्धेः इति गाथार्थः ॥ इत्थमुद्योतस्वरूपमभिधाय साम्प्रतं येनोद्योतेन लोकस्योद्योतकरा जिना भवन्ति तेनैव युक्तानुपदर्शयन्नाह—

उद्योतनिक्षेपः
॥ ५९४ ॥

लोगस्सुज्जोअगरा दव्वुज्जोएण न हु जिणा हुंति । भावुज्जोअगरा पुण हुंति जिणवरा चउवीसं ॥ १०७३ ॥

लोकस्योद्योतकरा द्रव्योद्योतेन नैव जिना भवन्ति, किन्तु तीर्थकरनामकर्म्मोदयतो अतुलसत्त्वार्थसम्पादनेन भावोद्योतकराः पुनर्भवन्ति जिनवराश्चतुर्विंशतिरिति, अत्र पुनःशब्दो विशेषणार्थः, स चैतद् विशिनष्टि–आत्मानमधिकृत्य केवलज्ञानेनोद्योतकराः, लोकप्रकाशकवचनप्रदीपापेक्षया तु शेषकतिपयभव्यविशेषानधिकृत्योद्योतकराः अत एवोक्तं भवति, कोऽर्थः ?, न न भवन्ति, ननु भवन्त्येव, कांश्चन प्राणिनोऽधिकृत्योद्योतकरत्वस्यासम्भवात्, चतुर्विंशतिग्रहणमधिकृतावसर्प्पिणीगततीर्थकरसङ्ख्याप्रतिपादनार्थं ॥ उद्योताधिकारे एव द्रव्योद्योतभावोद्योतयोर्विशेषप्रतिपादनार्थमाह—

दव्वुज्जोओज्जोओ पगासई परिमिअम्मि खित्तम्मि । भावुज्जोओज्जोओ लोगालोगं पयासेइ ॥ १०७४ ॥

द्रव्योद्योतोद्योतो–द्रव्योद्योतप्रकाशः पुद्गलात्मकत्वात् तथाविधपरिणामयुक्तत्वाच्च प्रकाशयते, पाठान्तरं प्रभासते, परिमिते क्षेत्रे, अत्र यदा प्रकाशयति तदा प्रकाश्यं वस्तु अध्याह्रियते, यदा तु प्रभासते तदा स एव दीप्यते इति गृह्यते, भावोद्योतोद्योतो लोकालोकं प्रकाशयति प्रकटार्थं ॥ उक्त उद्योतः, सम्प्रति करमवसरप्राप्तमपि धर्म्मतीर्थकरानित्यत्र वक्ष्यमाणत्वाद्विहाय धर्म्मं प्रतिपिपादयिषुराह—

दुह दव्वभावधम्मो दव्वे सव्वस्स दव्वमेवऽहवा । तित्ताइसहावो वा गम्माइत्थी कुलिंगो वा ॥ १०७५ ॥

धर्म्मो द्विविधः, तद्यथा–द्रव्यधर्मो भावधर्म्मश्च, तत्र द्रव्ये इति द्वारपरामर्शः, द्रव्यविषयो धर्म्म उच्यते–द्रव्यस्य–अनुपयुक्तस्य धर्म्मो मूलोत्तरगुणानुष्ठानं द्रव्यधर्म्मः, इहानुपयुक्तो द्रव्यं 'अनुपयोगो द्रव्य'मिति वचनात्, द्रव्यमेव वा

धम्मो द्रव्यधर्म्मः-धर्म्मास्तिकायः 'तित्ताइसहावो वा' इति तिक्तादिर्वा द्रव्यस्य स्वभावो द्रव्यधर्म्मः 'गम्माइत्थी
कुलिंगो व'त्ति गम्यादिर्धर्म्मः स्त्रीविषयो द्रव्यधर्म्मः, तत्र केषाञ्चित् मातुलदुहिता गम्या केषांचिदगम्येत्यादिः तथा
कुलिङ्गो वा-कुतीर्थिकधर्म्मो द्रव्यधर्म्मः, पाठान्तरं 'दुविहो य होइ धम्मो दवधम्मो य भावधम्मो य । धम्मत्थिकाउ
दवे दवस्स व जो भवे भावो ॥ १ ॥' सुगमं । भावधर्म्मप्रतिपादनार्थमाह—
दुह होइ भावधम्मो सुअ चरणे वा सुअम्मि सज्झाओ । चरणम्मि समणधम्मो खंतीमाई भवे दसहा १०७६
द्विविधो भवति भावधर्म्मः, तद्यथा-श्रुते चरणे च, श्रुतधर्मश्चरणधर्म्मश्चेत्यर्थः, तत्र श्रुते श्रुतविषयो धर्म्मः स्वाध्या-
यो-वाचनादिः, चरणे चरणविषयो धर्म्मः श्रमणधर्म्मो, दशधा दशप्रकारः क्षान्त्यादिः, पाठान्तरं वा 'भावंमि होइ
दुविहो सुयधम्मो खलु चरित्तधम्मो य । सुयधम्मो सज्झातो चरित्तधम्मो समणधम्मो ॥ १ ॥' सुगमं । संप्रति तीर्थ-
निरूपणायाह—
नामं ठवणातित्थं दवतित्थं च भावतित्थं च । इक्किक्कंपि अ इत्तो णेगविहं होइ नायवं ॥ १०७७ ॥
'नामं'ति नामतीर्थं स्थापनातीर्थं द्रव्यतीर्थं भावतीर्थं च, 'एत्तो'त्ति नामादिनिक्षेपमात्रकरणादनन्तरमेकैकं नामती-
र्थादि अनेकविधं भवति ज्ञातव्यं ॥ तत्र नामतीर्थमनेकविधं जीवाजीवविषयादिभेदात्, स्थापनातीर्थं साकारानाकारभेदात्,
द्रव्यतीर्थं आगमनोआगमादिभेदात्, तत्र ज्ञशरीरभव्यशरीरद्रव्यतीर्थप्रतिपादनार्थमाह—
दाहोवसमं तण्हाइ छेअणं मलपवाहणं चेव । तीहिं अत्थेहिं निउत्तं तम्हा तं दवओ तित्थं ॥ १०७८ ॥

इह ज्ञशरीरभव्यशरीरव्यतिरिक्तं नोआगमतो द्रव्यतीर्थं मागधवरदामादि परिगृह्यते, वाह्यदाहादेरेव तत उपशमसद्भावात्, तथा चाह–दाहोपशममिति, दाहो–वाह्यः सन्तापः तस्योपशमो यस्मिन् तद्दाहोपशमं 'तण्हावुच्छे(इछे)यणं'ति तृषः–पिपासायाः छेदनं जलसङ्घातेन तदपनयनात्, तथा मलो वाह्यः अङ्गसमुत्थस्तस्य प्रवाहणं, प्रवाह्यतेऽनेनेति प्रवाहणं, जलेन तस्य प्रक्षालनात्, एवं त्रिभिरर्थैः कारणगतैर्नियुक्तं निश्चयेन युक्तं निर्युक्तं–प्ररूपितं, यद्दिवा प्राकृतत्वात् सप्तम्यर्थे तृतीया, त्रिषु अर्थेषु नियोजितं, यस्मादेवं वाह्यदाहादिविषयमेव तस्मात् मागधादि द्रव्यतीर्थं, मोक्षसाधकत्वाभावात् ॥ सम्प्रति भावतीर्थमधिकृत्याह—

कोहम्मि उ निग्गहिए दाहस्सोवसमणं हवइ तत्थं । लोहम्मि उ निग्गहिए तण्हावुच्छेअणं होइ ॥ १०७९ ॥

अट्ठविहं कम्मरयं बहुएहिं भवेहिं संचिअं जम्हा । तव–संजमेण धोवइ तम्हा तं भावओ तित्थं ॥ १०८० ॥

इह भावतीर्थमपि आगमनोआगमभेदतोऽनेकप्रकारं, तत्र नोआगमतो भावतीर्थं क्रोधादिनिग्रहसमर्थं प्रवचनमेव गृह्यते, तथा चाह–क्रोधे एव निगृहीते दाहस्य द्वेषानलजातस्यान्तः प्रशमनं भवति तथ्यं–निरुपचरितं, नान्यथा, तथा लोभ एव निगृहीते 'तण्हावुच्छेयणं होति'त्ति तृषः–अभिष्वंगलक्षणायाः छेदनं–व्यपगमो भवति, तथा अष्टविधं अष्टप्रकारं कर्म्मैव जीवानुरंजनात् कर्म्मरजः बहुभिर्भवैः सञ्चितं तपःसंयमेन धाव्यते–शोध्यते यस्मात् तस्मात् प्रवचनं भावतीर्थम् ॥

दंसणनाणचरित्तेसु निउत्तं जिणवरेहिं सव्वेहिं । एएण होइ तित्थं एसो अन्नोऽवि पज्जाओ ॥ १०८१ ॥

दर्शनज्ञानचारित्रेषु नियुक्तं–नियोजितं सर्वैः ऋषभादिभिर्जिनवरैः–तीर्थकृद्भिः, यस्मादित्थंभूतेषु नियुक्तं तस्मात्

प्रवचनं भावतीर्थं, अथवा येन कारणेनेत्थंभूतेषु त्रिष्वर्थेषु नियुक्तमेतेन कारणेन प्रवचनं भावतस्त्रिस्थं, एष त्रिस्थलक्षणः तीर्थशब्दापेक्षया अन्यः पर्यायः ॥ उक्तं तीर्थं, अधुना कर उच्यते—

नामकरो ठवणकरो दव्वकरो खित्त-काल-भावकरो । एसो खलु करगस्स उ निक्खेवो छव्विहो होइ ॥१०८२॥

नामकरः स्थापनाकरः द्रव्यकरः 'क्षेत्रकालभावकरो' इति करशब्दः प्रत्येकमभिसम्बध्यते क्षेत्रकरः कालकरो भावकरश्च, एष खलु कर एव करकस्तस्य निक्षेपः षड्विधो भवति ॥ तत्र नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यकरमभिधित्सुराह—

गो-महिसु-ट्टि-पसूणं छगलीणंपि अ करा मुणेअव्वा । तत्तो अ तणपलाले भुसकट्ठंगारकरमेव ॥१०८३॥

सीउंबरजंघाए वलिवद्दकरे घडे अ चम्मे य । चुल्लगकरे अ भणिए अट्ठारसमा करुप्पत्ती ॥१०८४॥

गोमहिषोष्ट्रपशूनां छगलीनामपि च करा ज्ञातव्याः, तत्र गोकरो गोयाचनं, यथा एतावतीषु विक्रीतास्वेका गौर्दातव्येति, यदिवा गोविक्रयस्य रूपकयाचनं गोकरः १ एवं महिषकर, २ उष्ट्रकरः ३ पशुकरः ४ छगली-उरभ्रा तत्करः छगलीकरः ५ ततस्तृणविषयः करः तृणकरः ६ पलालकरः ७ तथा बुसकरः ८ काष्ठकरः ९ अङ्गारकरः १० शीता-लाङ्गलपद्धतिस्तामाश्रित्य करो-भागो धान्ययाचनं शीताकरः ११ उम्बरो-देहली तद्विषयः करो रूपकयाचनं उम्बरकरः १२, एवं जङ्घाकरः १३ बलीवर्दकरः १४ घटकरः १५ चर्मकरः १६ चुल्लगो-भोजनं तदेव करः चुल्लगकरः, स चायं ग्रामेषु पञ्चकुलादीनधिकृत्य प्रसिद्ध एव १७ अष्टादशा करस्योत्पत्तिः स्वकल्पनाशिल्पिनिर्म्मिता, पूर्वोक्तसप्तदशकरव्यतिरिक्तः स्वेच्छया कल्पितोऽष्टादशः करः, स स्वौत्पत्तिक इति प्रसिद्धः ॥ उक्तो द्रव्यकरः, सम्प्रति क्षेत्रकरादीनभिधित्सुराह—

खित्तम्मि जंमि खित्ते काले जो जम्मि होइ कालम्मि। दुविहो उ होइ भावे अपसत्थो तह पसत्थो अ ॥१०८५॥

यो यस्मिन् क्षेत्रे शुल्कादिरूपो विचित्रः करः स क्षेत्रे–क्षेत्रविषयः करः, तथा यो यस्मिन् काले भवति कुटिकादानादिरूपः करः स काले कालकरः, द्विविधश्च भवति भावे भावकरः, द्वैविध्यमेव दर्शयति–प्रशस्तः तथा अप्रशस्तश्च, तत्राप्रशस्तपरित्यागात् (प्रशस्तो भवतीति) प्रशस्तमेवाभिधित्सुराह—

कलहकरो डमरकरो असमाहिकरो अनिव्वुइकरो अ। एसो अ अप्पसत्थो एवमाई मुणेअव्वो ॥ १०८६ ॥

आह–उक्तप्रयोजनसद्भावात् तदुद्देशेऽप्ययमेवादावप्रशस्तः कस्मान्नोपन्यस्तः?, उच्यते, इह मुमुक्षुणा प्रशस्त एव भाव आसेवनीयो, नेतर इति ख्यापनार्थमादौ प्रशस्त उक्त इत्यदोषः, तत्र कलहो–वाचिकं भण्डनं तत्करणशीलोऽप्रशस्तक्रोधाद्यौदयिकभाववशतः कलहकरः, कायवाङ्मनोभिर्विचित्रं ताडनं डमरं तत्करणशीलो डमरकरः, तथा समाधानं समाधिः–स्वास्थ्यं न समाधिरसमाधिः–अस्वास्थ्यनिबन्धना सा सा कायादिचेष्टा तत्करणशीलोऽसमाधिकरः, निर्वृत्तिः–सुखं अनिर्वृत्तिः–पीडा तत्करणशीलोऽनिर्वृत्तिकरः, एष तुशब्दस्यावधारणार्थत्वादेष एव जात्यपेक्षया, न व्यक्त्यपेक्षया, एवमादिर्व्यक्त्यपेक्षया, अप्रशस्तो भावकरो ज्ञातव्यः ॥ सम्प्रति प्रशस्तं भावकरमभिधित्सुराह—

अत्थकरो हिअकरो कित्तिकरो गुणकरो जसकरो अ। अभयंकर निव्वुइकरो कुलगर तित्थंकरंतकरो ॥१०८७॥

इह अर्थो नाम विद्याऽपूर्वं धनार्जनं शुभमर्थ इति ततः प्रशस्तविचित्रकर्म्मक्षयोपशमादिभावतस्तत्करणशीलोऽर्थकरः, एवं हितादिष्वपि भावनीयं, नवरं हितं–परिणामपथ्यं यत्किञ्चित्कुशलानुबन्धि, कीर्त्तिः–दानपुण्यफला गुणा–ज्ञानादयः

यशः-पराक्रमकृतं, पराक्रमसमुत्थः साधुवाद इति भावः, अभयादयः प्रकटार्थाः, नवरमन्तकर इत्यत्रान्तः कर्मणां तत्फलभूतस्य वा संसारस्य परिगृह्यते ॥ उक्तो भावकरः, अधुना जिनादिप्रतिपादनार्थमाह—

जिअकोह-माण-माया जिअलोभा तेण ते जिणा हुंति। अरिणो हन्ता रयं हंता अरिहंता तेण वुच्चंति ॥१०८८॥

जितक्रोधमानमाया जितलोभा येन कारणेन भगवन्तस्तेन कारणेन जिना भवन्ति, 'अरिणो हंता' इत्यादि गाथादलं यथा नमस्कारनिर्युक्तौ व्याख्यातं तथैव द्रष्टव्यं ॥ साम्प्रतं 'कीर्त्तयिष्यामि' इत्यादि व्याचिख्यासुरिदमाह—

कित्तेमि कित्तणिज्जे सदेवमणुआसुरस्स लोगस्स । दंसणनाणचरित्ते तवविणयो दंसिओ जेहिं ॥ १०८९ ॥

'कित्तेमि'त्ति प्राकृतत्वात् कीर्त्तयिष्यामि, नामभिर्गुणैश्च, किंभूतान् ?-कीर्त्तनीयान्, स्तवार्हानित्यर्थः, कस्येत्यत्राह-'सदेवमनुजासुरस्य लोकस्य त्रैलोक्यस्येति भावः, गुणानुपदर्शयति-दर्शनज्ञानचारित्राणि मोक्षकारणानि, सूत्रे चैकवचनं समाहारत्वात्, तथा तपोविनयोऽत्र दर्शितः यैः, तत्र तप एव कर्म्मविनयात् तपोविनयः ॥

चउवीसंति अ संखा उसभाईआ उ भण्णमाणा उ । अविसद्दग्गहणा पुण एरवयमहाविदेहेसु ॥ १०९० ॥

चतुर्विंशतिरिति संख्या, ते तु ऋषभादिका भण्यमाना एव, तुशब्द एवकारार्थः, अपिशब्दग्रहणात् पुनः ऐरवतमहाविदेहेषु ये भगवन्तस्तद्ग्रहोऽपि वेदितव्यः, इह सूत्रे 'तात्स्थ्यात्तद्व्यपदेश' इति न्यायादैरावतमहाविदेहाश्चेत्युक्तम् ॥

कसिणं केवलकप्पं लोगं जाणंति तह य पासंति । केवलचरित्तनाणी तम्हा ते केवली हुंति ॥ १०९१ ॥

'कृत्स्नं' सम्पूर्णं 'केवलकल्पं' केवलोपमं, इह कल्पशब्द औपम्ये गृह्यते, उक्तं च-"सामर्थ्ये वर्णनायां च, छेदने

करणे तथा । औपम्ये चाधिवासे च, कल्पशब्दं विदुर्बुधाः ॥ १ ॥" लोकं पञ्चास्तिकायात्मकं जानन्ति विशेषरूपतया, तथैव
सम्पूर्णमेव, चशब्दस्यावधारणार्थत्वात्, पश्यन्ति सामान्यरूपतया, इह ज्ञानदर्शनयोः सम्पूर्णलोकविषयत्वे बहु वक्तव्यं,
तत्तु नोच्यते, ग्रन्थविस्तरभयात्, केवलं 'निर्विशेषं विशेषाणां, ग्रहो दर्शनमुच्यते । विशिष्टग्रहणं ज्ञानमेवं सर्वत्रगं द्वय ॥२॥'-
मित्यनया दिशा स्वयमेवाभ्यूह्यं, धर्मसङ्ग्रहणीटीका च परिभावनीया, यतश्चैवं केवलचारित्रिणः केवलज्ञानिनश्च तस्मात्ते
केवलिनो भवन्ति, केवलमेषां विद्यते इति केवलिनः इति व्युत्पत्तेः, अहोऽत्राकाण्ड एव केवलचारित्रिण इति किमर्थ-
मुक्तं ?, उच्यते, केवलचारित्रप्राप्तिपूर्विका नियमतः केवलज्ञानावाप्तिरिति न्यायदर्शनार्थमित्यदोषः । तदेवं व्याख्यातो
लोकस्येत्यादिरूपः सूत्रप्रथमश्लोकः ॥

साम्प्रतमत्रैव चालनाप्रत्यवस्थाने विशेषतो निदर्श्यते, तत्र लोकस्योद्योतकरानित्युक्तं, अत्राह—अशोभनमिदं यदुक्तं—
लोकस्येति, लोको हि चतुर्दशरज्ज्वात्मकत्वेन परिमितः, केवलोद्योतश्चापरिमितो, लोकालोकव्यापकत्वात्, यद्वक्ष्यति—'केव-
लियनाणलंभो लोगालोगं पगासेइ' ततः सामान्यतः उद्योतकरान् यदिवा लोकालोकयोरुद्योतकरानिति वाच्यं, नतु लोक-
स्येति, तदयुक्तं, अभिप्रायापरिज्ञानात्, इह लोकशब्देन पञ्चास्तिकाया एव गृह्यन्ते, ततः आकाशास्तिकायभेद एव लोक
इति न पृथगुक्तः, न चेतदनार्षं, यत उक्तम्—"पंचत्थिकायमइओ लोगो' इत्यादि । अपरस्त्वाह—लोकस्योद्योतकरानित्येतावदेव
साधु, धर्मतीर्थकरानिति न वक्तव्यं, गतार्थत्वात्, तथाहि—ये लोकस्योद्योतकरास्ते धर्मतीर्थकरा एवेति, उच्यते, इह लोकै-
कदेशे ग्रामैकदेशे ग्रामशब्दवत् लोकशब्दप्रवृत्तिदर्शनात् मा भूत्तदुद्योतकरेष्ववधिविभङ्गज्ञानिष्वर्कचन्द्रादिषु वा सम्प्रत्यय

इति तद्व्यवच्छेदार्थं धर्म्मतीर्थकरानित्युक्तं । आह–यद्येवं धर्म्मतीर्थकरानित्येतावदेवास्तु, लोकस्योद्योतकरानिति न वाच्यं, उच्यते, इह लोके येऽपि नद्यादिविषमस्थानेषु मुधिकया धर्म्मार्थमवतरणतीर्थकरणशीलास्तेऽपि धर्म्मतीर्थकरा भण्यन्ते, ततो मा भूदतिमुग्धबुद्धीनां तेषु सम्प्रत्यय इति तदपनोदाय लोकस्योद्योतकरानित्याह । अपरस्त्वाह–जिनानित्यतिरिच्यते, तथाहि–यथोक्तप्रकारा जिना एव भवन्तीति, उच्यते, इह केषांचिदिदं दर्शनं–"ज्ञानिनो धर्म्मतीर्थस्य, कर्त्तारः परमं पदम् । गत्वाऽऽगच्छंति भूयोऽपि, भूशं (भवं) तीर्थनिकारतः ॥ १ ॥" इत्यादि, ततस्तन्मतपरिकल्पितेषु यथोक्तप्रकारेषु मा भूत् सम्प्रत्यय इति तद्व्यवच्छेदार्थं जिनानित्याह, जिना नाम रागादिजेतारः, ते च कुनयपरिकल्पिता जिना न भवन्तीति, तीर्थनिकारतः पुनरिह भवाङ्कुरोत्पादनाद्, अन्यथा स न स्यात्, बीजाभावात्, तथा चोक्तमन्यैरपि–"अज्ञानपांशुपिहितं पुरातनं कर्म्मबीजमविनाशि । तृष्णाजलाभिषिक्तं मुञ्चति जन्माकुरं जन्तोः ॥ १ ॥ दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः । कर्म्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ २ ॥" आह–यद्येवं जिनानित्येतावदेवास्तु, लोकस्योद्योतकरानित्याद्यतिरिच्यते, उच्यते, इह प्रवचने सामान्यतो विशिष्टश्रुतधरादयोऽपि जिना उच्यंते, तद्यथा–श्रुतजिना अवधिजिना मनःपर्यायज्ञानिजिनाश्छद्मस्थवीतरागाश्च, ततो मा भूत्तेषु सम्प्रत्यय इति तदपनोदाय लोकस्योद्योतकरानित्याद्यप्यदुष्टं । अपरस्त्वाह–अर्हत इति न वाच्यं, न खल्वनन्तरोदितस्वरूपा अर्हद्व्यतिरेकेणापरे सम्भवन्ति, उच्यते, अर्हतामेव विशेष्यत्वान्न दोषः, आह–यद्येवं तर्हि अर्हत इत्येतावदेवास्तु, लोकस्योद्योतकरानित्यादि पुनरपार्थकं, न, तस्य विशेषणत्वात्, विशेषणसाफल्यस्य च प्रतिपादितत्वादिति । अपरस्त्वाह–केवलिन इति न वाच्यं, यथोक्तस्वरूपाणामर्हतां केवलित्वव्यभि-

चाराभावात्, सति च व्यभिचारसम्भवे विशेषणोपादानं फलवत्; तथा चोक्तं—"सम्भवे व्यभिचारे च विशेषणमर्थवद्
भवति', यथा नीलोत्पलमिति, व्यभिचाराभावे तु तदुपादीयमानमपि न कंचनार्थं पुष्णाति, यथा कृष्णो भ्रमरः शुक्ला
वलाकेति; तस्मात् केवलिन इत्यतिरिच्यते, न, अभिप्रायापरिज्ञानात्, इह केवलिन एव यथोक्तस्वरूपा अर्हन्तो, नान्ये
इति नियमार्थेन स्वरूपज्ञापनार्थमिदं विशेषणमित्यनवद्यं, न खल्वेकान्ततो व्यभिचारसम्भवे एव विशेषणोपादानं फलवत्,
उभयपदव्यभिचारे एकपदव्यभिचारे स्वरूपपरिज्ञापने च शिष्टोक्तिषु तत्प्रयोगदर्शनात्, तत्र उभयपदव्यभिचारे यथा नी-
लोत्पलमिति, एकपदव्यभिचारे अब् द्रव्यं पृथिवी द्रव्यमिति, स्वरूपपरिज्ञापने यथा परमाणुरप्रदेश इत्यादि, तस्मात्केवलिन
इत्यदुष्टं। आह-यद्येवं केवलिन इत्येव सुन्दरं, शेषं तु लोकस्योद्योतकरानित्यादि किमर्थमिति, उच्यते, इह श्रुतकेवलि-
प्रभृतयोऽपि केवलिनो विद्यन्ते, तन्मा भूत्तेषु सम्प्रत्यय इति तत्प्रतिक्षेपार्थं लोकस्योद्योतकरानित्याद्यप्युक्तं। एवं व्यादिसं-
योगापेक्षया विचित्रनयमताभिज्ञेन स्वधिया विशेषणसाफल्यं वाच्यमिति कृतं प्रसङ्गेन, प्रयासस्य गमनिकामात्रफलत्वात्॥
सम्प्रति यदुक्तं 'कीर्त्तयिष्यामि' इति कीर्त्तनं कुर्वन्नाह सूत्रकृत्—

उसभमजिअं च वंदे संभवमभिनंदणं च सुमइं च। पउमप्पहं सुपासं जिणं च चंदप्पहं वंदे ॥ २ ॥
सुविहिं च पुप्फदंतं सीयल सिज्जंस वासुपुज्जं च। विमलमणंतं च जिणं धम्मं संतिं च वंदामि ॥ ३ ॥
कुंथुं अरं च मल्लिं वंदे मुणिसुव्वयं नमिजिणं च। वंदामि रिट्ठनेमिं पासं तह वद्धमाणं च ॥ ४ ॥ (सूत्राणि)

एतासां तिसृणामपि सूत्रगाथानां व्याख्या—इह भगवतामर्हतां नामानि अन्वर्थमधिकृत्य सामान्यलक्षणतो विशेषल-

क्षणतश्च वाच्यानि, तत्र सामान्यलक्षणमिदम्—'वृष उद्वहने' एष आगमिको धातुः, समग्रसंयमभारोद्वहनात् वृषभः, सर्वे एव भगवन्तो यथोक्तरूपा इति विशेपहेतुप्रतिपादनायाह—

ऊरूसु उसभलंछण उसभं सुमिणम्मि तेण उसभजिणो ।

जेण भगवतो दोसुवि ऊरूसु उसभा उप्पराहुत्ता लंछणभूया, जेणं च मरुदेवाए भयवतीए चोद्दसण्हं महासुमिणाणं पढमं उसभो सुमिणे दिट्ठो तेण तस्स उसभत्ति नामं कयं, सेसतित्थयराणं मायरो पढमं गयं पासंति, तओ वसभो । अक्षरगमनिका त्वेवं—यतो भगवत ऊर्वोः वृषभावूर्ध्वमुखौ लाञ्छनं मरुदेवी च भगवती स्वप्ने प्रथमं ऋषभं दृष्टवती तेन भगवान् ऋषभजिनः । साम्प्रतमजितः, तस्य सामान्येनाभिधाननिबन्धनमिदं—परीषहोपसर्गादिभिर्न जितः अजितः, सर्वे एव च भगवन्तो यथोक्तस्वरूपा इति विशेपनिबन्धनमभिधित्सुराह—

अक्खेसु जेण अजिआ जणणी अजितो जिणो तम्हा ॥ १०९२ ॥

अक्षेषु—अक्षविषयेषु येन कारणेन भगवतो जननी अजिता गर्भस्थे भगवत्यभूत् तस्मादजितो जिनः, अत्र वृद्धसम्प्रदायः- भयवतो अम्मापियरो जूयं रमंति, पढमं राया जिणियाइतो, जाहे भयवं आयातो ताहे देवी जिणाइ, नो राया, ततो अक्खेसु कुमारप्पभावा देवी अजियत्ति अजिओ नामं कयं ॥ तथा सम्भवन्ति—प्रकर्षेण भवंति चतुस्त्रिंशदतिशयगुणा यस्मिन् स सम्भवः, सर्वे एव च भगवन्तो यथोक्तस्वरूपा इति विशेपनिबन्धनमभिधित्सुराह—

अभिसंभूया सासत्ति संभवो तेण वुच्चई भयवं ।

अभिसम्भूतानि—सम्यक् भवन्ति स्म सस्यानि तस्मिन् गर्भजाते तेन कारणेन भगवान् सम्भव इत्युच्यते, 'पुन्नाम्नी'त्यधिकरणे घप्रत्ययः, तथा च वृद्धसम्प्रदायः—गब्भगए जेण अहिगा सस्सनिप्फत्ती जाया तेण संभवो इति ॥ तथा अभिनन्द्यते देवेन्द्रादिभिरित्यभिनन्दनः, सर्वे एव भगवन्तो यथोक्तस्वरूपा इत्यतो विशेषहेतुप्रतिपादनायाह—

अभिनंदेइ अभिक्खं सक्को अभिनंदणो तेण ॥ १०९३ ॥

शक्रो गर्भादारभ्याभिक्ष्णं—प्रतिक्षणं अभिनन्दितवानिति अभिनन्दनः, 'कृद्बहुल मिति वचनात् कर्म्मण्यनट्, तथा च वृद्धसम्प्रदायः—गब्भप्पभिई अभिक्खणं सक्केण अभिनंदियाइत्तो तेण से अभिणंदणोत्ति नामं कयं । इदानीं सुमतिः, तस्य सामान्याभिधाननिबन्धनमिदम्—शोभना मतिरस्येति सुमतिः, सर्वे एव च भगवंतः सुमतय इति विशेषनिबन्धनप्रतिपादनार्थमाह—

जणणी सवत्थ विणिच्छिएसु सुमइत्ति तेण सुमतिजिणो ।

येन कारणेन गब्भगते भगवति सर्वेषु विनिश्चयेषु—कर्त्तव्येषु सुमतिः—अतीव मतिः सम्पन्ना जाता तेन कारणेन भगवान् सुमतिजिनः, जननीसुमतिहेतुत्वात् सुमतिरिति भावः, शोभना मतिरस्मादभूदिति व्युत्पत्तेः, तथा च वृद्धसम्प्रदायः—जणणी गब्भगए सवत्थ विणिच्छएसु अतीव मइसम्पन्ना जाया, दोण्हं सवत्तीणं मयपइयाणं ववहारो छिन्नो, जहा मम पुत्तो भविस्सइ, सो जोबणत्थो एयस्स असोगवरपायवस्स अहे ववहारं तुब्भं छिंदिहिति, ताव एगयाओ भवह, इयरी भणइ—

एवं भवतु, पुत्तमाया नेच्छइ, भणइ—ववहारो छिज्जउ, ततो भावं नाऊण छिन्नो ववहारो, दिन्नो तीसे पुत्तो, एवमादी गब्भगुणेणं जणणीए सुमती जायत्ति सुमइनामं कयं । इदानीं पद्मप्रभः, तस्य सामान्यतोऽभिधानकारणमिदं—निष्पङ्कतया पद्मस्येव प्रभा यस्य स पद्मप्रभः, तत्र सर्व एव भगवन्तो यथोक्तस्वरूपाः ततो विशेषकारणमाह—

पउमसयणम्मि जणणीएँ डोहलो तेण पउमाभो ॥ १०९४ ॥

येन कारणेन तस्मिन् भगवति गर्भगते जनन्या देव्या पद्मशयनीये दौर्हृदमभूत्, तच्च देवतया सम्पादितं, भगवांश्च स्वरूपतः पद्मवर्णस्तेन कारणेन पद्मप्रभ इतिनामविषयीकृतः । सम्प्रति सुपार्श्वः, तस्यायमोघतो नामान्वर्थः, शोभनानि पार्श्वाणि यस्यासौ सुपार्श्वः, तत्र सर्व एव भगवन्त एवंभूतास्ततो विशिष्टं नामान्वर्थमभिधित्सुराह—

गब्भगए जं जणणी जाय सुपासा तओ सुपासजिणो ।

यतो गर्भगते भगवति तत्प्रभावतो जननी जाता सुपार्श्वा ततो जिनः सुपार्श्व इतिनामविषयीकृतः, एवं सामान्याभिधानं विशेषाभिधानं चाधिकृत्यान्वर्थाभिधानविस्तरो भावनीयः, इह पुनः सुज्ञानत्वात् ग्रन्थविस्तरभयाच्च नाभिधीयते । सम्प्रति चन्द्रप्रभः—चन्द्रस्येव प्रभा—ज्योत्स्ना सौम्यमस्येति चन्द्रप्रभः, तत्र सर्वेऽपि तीर्थकृतश्चन्द्रवत् सोमलेश्याकास्ततो विशेषमाह—

जणणीइ चंदपिअणम्मि डोहलो तेण चंदाभो ॥ १०९५ ॥

येन कारणेन भगवति गर्भगते जनन्याः चन्द्रपाने दौर्हृदमजायत चन्द्रसदृशवर्णश्च भगवान् तेन चन्द्राभः—चन्द्रप्रभ-

ऋषभदीनां सामान्यविशेषार्थः

इति विश्रुतः । सम्प्रति सुविधिः, शोभनो विधिरस्येति सुविधिः, विधिर्नाम सर्वत्र कौशलं, तत्र सर्वे एव भगवन्त इदृशा इति विशेषकारणमाह—

सव्वविहीसु अ कुसला गब्भगए तेण होइ सुविहिजिणो ।

भगवति गर्भगते जननी सर्वविधिषु कुशलाऽभवत् तेन सुविधिजिन इति नाम कृतं॥ सम्प्रति शीतलः, सकलसत्त्वसन्तापकरणविरहादाल्हादजननाच्च शीतलः, तत्र सर्वेऽपि भगवन्तः शत्रूणां मित्राणां चोपरि शीतगृहसमानास्ततो विशेषमाह—

पिउणो दाहोवसमो गब्भगए सीअलो तेण ॥ १०९६ ॥

भगवतः पितुः पूर्वोत्पन्नोऽसदृशः पित्तदाहोऽभवत्, स चौषधैर्नानाप्रकारैर्नोपशाम्यति, भगवति तु गर्भगते देव्या परामर्शे स दाह उपशान्तः, तेन शीतल इति नाम । इदानीं श्रेयान्, समस्तभुवनस्य हितकारित्वात् प्रशस्यतरः श्रेयान्, प्राकृतशैल्या छान्दसत्वात् सेयंस इत्युच्यते, तत्र सर्वेऽपि भगवन्तस्त्रैलोक्यस्यापि श्रेयांस इति विशेषमाह—

महरिहसिज्जारुहणम्मि डोहलो तेण होइ सिज्जंसो ।

तस्य राज्ञः पितृपरम्परागता देवतापरिगृहीता शय्या अर्च्यते, यस्तामाश्रयति तस्योपसर्गं देवता करोति, गर्भगते च भगवति देव्या दौर्हृदमजायत—शय्यामारोहामि, तत्रोपविष्टा, देवता समारसितुमपक्रान्ता, सा हि तीर्थंकरनिमित्तं देवतया रक्षिता, एवं गर्भप्रभावतो देव्याः श्रेयो जातमिति श्रेयांस इति नाम कृतम् । साम्प्रतं वासुपूज्यः—वासवो—देवाः तेषां पूज्यः


वासुपूज्यः, सर्व एव भगवन्त इदृशा इति विशेषमाह—

गब्भगते तं वसूहिं पूएई तेण वसुपुज्जो ॥ १०९७ ॥

तस्मिन् भगवति गर्भगते वासवो–देवराजः अभीक्ष्णं जननीं पूजयति, तेन वासुपूज्य इति नाम, पृषोदरादित्वादिष्टरूपनिष्पत्तिः, अथवा वासवो नाम वैश्रमणः, स गर्भगते भगवति तत् राजकुलमभीक्ष्णं वसुभी–रत्नैः पूजयति पूरयति तेन कारणेन वासुपूज्यः । सम्प्रति विमलः, विगतो (मलो) विगतमलो विमलः, ज्ञानादियोगाद्वा मलः, तत्र सर्वेऽपि भगवन्त एवंभूता अतो विशेषमाह—

विमलतणु–बुद्धि जणणी गब्भगए तेण होइ विमलजिणो ॥

गर्भगते भगवति जनन्यास्तनुः–शरीरं बुद्धिश्च विमला, तद्दौर्हृदं चेत्थमजायत, यथाऽहं विमला भवामि, तेन कारणेन नामतो भवति विमलजिनः । साम्प्रतमनन्तः, अनन्तकर्मांशजयाद् अनन्तानि वा ज्ञानादीन्यस्येत्यनन्तः, तत्र सर्वेऽपि भगवन्त ईदृशा अतो विशेषमाह—

रयणविचित्तमणंतं दामं सुमिणे तओऽणंतो ॥ १०९८ ॥

रत्नविचित्रं–रत्नखचितं अनन्तं–अतिमहाप्रमाणं दाम स्वप्ने जनन्या दृष्टं अतोऽनन्त इति । सम्प्रति धर्म्मः, दुर्गतौ प्रपतन्तं सत्त्वसङ्घातं धारयतीति धर्म्मः, तत्र सर्वेऽपि भगवन्त ईदृशाः ततो विशेषमाह—

गब्भगए जं जणणी जाय सुधम्मत्ति तेण धम्मजिणो ।

भगवति गर्भगते येन कारणेन विशेषतो जननी जाता सुधर्मा–दानदयादिरूपशोभनधर्म्मपरायणा तेन नामतो

धर्म्मजिनः । इदानीं शान्तिः, शान्त्यात्मकत्वात् शान्तिः, तत्र सर्व एव तीर्थकृत एवंरूपा अतो विशेषमाह—

जाओ असिवोवसमो गब्भगए तेण संतिजिणो ॥ १०९९ ॥

पूर्वं महदशिवमासीत्, भगवति तु गर्भगते जातः अशिवोपशमः तेन कारणेन शान्तिजिनः। सम्प्रति कुन्थुः, कुः—पृथिवी तस्यां स्थितवान् कुन्थुः, पृषोदरादित्वादिष्टरूपनिष्पत्तिः, तत्र सर्वेऽपि भगवन्त एवंविधाः, ततो विशेषमाह—

थूभं रयणविचित्तं कुंथुं सुमिणम्मि तेण कुंथुजिणो ।

जननी स्वप्ने कुस्थं—मनोहरेऽभ्युन्नते महीप्रदेशे (स्थितं) स्तूपं रत्नविचित्रं दृष्ट्वा प्रतिबुद्धवती तेन कारणेन भगवान् नामतः कुन्थुजिनः ॥ साम्प्रतमरः ॥

इति श्रीमन्मलयगिर्याचार्यविहिताया आवश्यकवृत्तेः तृतीयभागः समाप्तः ॥

इति श्रीमन्मलयगिर्याचार्यविरचिता आवश्यकवृत्तिः समाप्ता ॥

इति श्रेष्ठी-देवचन्द्र लालभ्रातृ-जैनपुस्तकोद्धारे ग्रथाङ्कः ८५

इति श्रीमन्मलयगिर्याचार्यविरचिता आवश्यकवृत्तिः समाप्ता ॥

# आवश्यकस्य मलयगिरीयायां वृत्तेर्भागत्रयस्य विषयानुक्रमः ।

विषयः पत्राङ्कः



विषयः पत्राङ्कः

इति चतुर्विंशतिस्तवाध्ययनम् ।

# श्रेष्ठी देवचंद लालभाइ जैनपुस्तकोद्धारफंडद्वारा मुद्रिताः

## लभ्यग्रन्थाः—

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ४२ | आनंदकाव्यमहोदधिः ( षष्ठं मौक्तिकम् ) | ०-२०-० |
| ६२ | सुबोधासामाचारी | ०—८—० |
| ६४ | प्रवचनसारोद्धारः ( सटीक उत्तरार्द्धः ) | ४—०—० |
| ६६ | आनंदकाव्यमहोदधिः ( सप्तमं मौक्तिकम् ) | १—८—० |
| ६७ | तत्त्वार्थाधिगमसूत्रम् (भाष्यटीकायुतंपूर्वार्द्धम्) | ६—०—० |
| ६८ | नवपदप्रकरणम् ( लघुवृत्तिसहितम् ) | १—०—० |
| ६९ | पंचवस्तुकग्रन्थः ( स्वोपज्ञटीकाऽन्वितः ) | ३—०—० |
| ७० | आनंदकाव्यमहोदधिः ( अष्टमं मौक्तिकम् ) | १—८—० |
| ७१ | आचारप्रदीपः | १—८—० |
| ७२ | विचाररत्नाकरः | ३—०—० |
| ७३ | नवपदप्रकरणम् ( बृहद्वृत्तिसहितम् ) | ४—०—० |
| ७४ | लोकप्रकाशः ( द्वितीयो विभागः ) | २—८—० |
| ७५ | महावीरचरित्रम् (गुणचन्द्रगणिकृतं प्राकृतम्) | ४—०—० |
| ७६ | तत्त्वार्थाधिगमसूत्रम् ( भाष्यटीकायुतं उत्तरार्द्धम् ) | ६—०—० |
| ७७ | लोकप्रकाशः ( तृतीयो विभागः ) | २—०—० |
| ७८ | भरतेश्वरबाहुबलिवृत्तिः ( प्रथमो विभागः ) | २—०—० |
| ७९ | भक्तामर-कल्याणमन्दिर— नमिऊणस्तोत्रत्रयं सटीकम् | ५—०—० |
| ८० | प्रियङ्करनृपकथा | १—८—० |

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ८१ | अनेकार्थरत्नमञ्जूषा ( अष्टलक्षार्थी ) | ३—०—० |
| ८२ | कल्पसूत्रम् ( बारसासूत्रम् ) सचित्रम् | १२-०-० |
| ८३ | ऋषभपञ्चाशिका ( टीकाभाषान्तरयुता ) | ४—०—० |
| ८४ | जैनधर्मवरस्तोत्रम् ( टीकाभाषान्तरयुतम् ) | ३—०—० |

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| | मुद्र्यमाणाः ग्रन्थाः | |
| ८५ | आवश्यकसूत्रम् ( मलयगिरीयटीकायुतं तृतीयो विभागः, सम्पूर्णः ) अयं ग्रन्थः | |
| ८६ | लोकप्रकाशः ( चतुर्थ विभागः, सम्पूर्णः ) | |

प्राप्तिस्थानम्—

शेठ देवचंद लालभाई जैन धर्मशाला,
बडेखान् चकला, गोपीपुरा, सुरत.

